मनो मे संमोहस्थिरमपि हरत्येष बलवान्
अयोधातुं यद्वत्परिलघुरयस्कान्तशकलः ॥

लवः : *(प्रविश्य, स्वगतम्)* अविज्ञातवयः क्रमौचित्यात् पूज्यानपि सतः कथमभिवादयिष्ये? *(विचिन्त्य)* अयं पुनरविरुद्धप्रकार इति वृद्धेभ्यः श्रूयते। *(सविनयमुपसृत्य)* एष वो लवस्य शिरसा प्रणामपर्यायः।

अरुन्धतीजनकौ : कल्याणिन्! आयुष्मान् भूयाः।

कौसल्या : जात! चिरं जीव।

अरुन्धती : एहि वत्स! *(लवमुत्सङ्गे गृहीत्वा आत्मगतम्)* दिष्ट्या न केवल-मुत्सङ्गश्चिरान्मनोरथोऽपि मे पूरितः।

कौसल्या : जात! इतोऽपि तावदेहि। *(उत्सङ्गे गृहीत्वा)* अहो, न केवलं मांसलोज्ज्वलेन देहबन्धेन, कलहंसघोष- घर्घरानुनादिना स्वरेण च रामभद्रमनुसरति। जात! पश्यामि ते मुखपुण्डरीकम्। *(चिबुक-मुन्नमय्य, निरूप्य, सवाष्पाकूतम्)* राजर्षे! किं न पश्यसि? निपुणं निरूप्यमाणो वत्साया मे वध्वा मुखचन्द्रेणापि संवदत्येव।

जनकः : पश्यामि, सखि! पश्यामि। *(निरूप्य)*

वत्सायाश्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते,
संवृत्तिः प्रतिबिम्बतेव निखिला सैवाकृतिः सा द्युतिः ।
सा वाणी विनयः स एव सहजः पुण्यानुभावोऽप्यसौ
हा हा देवि किमुत्पथैर्मम मनः पारिप्लवं धावति ॥

कौसल्या : जात! अस्ति ते माता? स्मरसि वा तातम्?

लवः : नहि।

कौसल्या : ततः कस्य त्वम्?

लवः : भगवतः सुगृहीतनामधेयस्य वाल्मीकेः।

कौसल्या : अयि जात! कथयितव्यं कथय।

लवः : एतावदेव जानामि।

*(प्रविश्य सम्भ्रान्ताः)*

बटवः : कुमार! कुमार! अश्वोऽश्व इति कोऽपि भूतविशेषो जनपदेष्वनुश्रूयते, सोऽयमधुनाऽस्माभिः स्वयं प्रत्यक्षीकृतः।

लवः : 'अश्वोऽश्व' इति नाम पशुसमाम्नाये सांग्रामिके च पठ्यते, तद् ब्रूत–कीदृशः?

बटवः : अये, श्रूयताम्–

पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रम्
दीर्घग्रीवः स भवति, खुरास्तस्य चत्वार एव ।
शष्पाण्यत्ति, प्रकिरति शकृत्पिण्डकानाम्रमात्रान्
किं व्याख्यानैर्व्रजति स पुनर्दूरमेह्येहि यामः ॥

*(इत्यजिने हस्तयोश्चाकर्षन्ति)*

लवः : *(सकौतुकोपरोधविनयम्।)* आर्याः! पश्यत। एभिर्नीतोऽस्मि। *(इति त्वरितं परिक्रामति।)*

अरुन्धतीजनकौ : महत्कौतुकं वत्सस्य।

कौसल्या : अरण्यगर्भरूपालापैर्यूयं तोषिता वयं च। भगवति! जानामि तं पश्यन्ती वञ्चितेव। तस्मादितोऽन्यतो भूत्वा प्रेक्षामहे तावत् पलायमानं दीर्घायुषम्।

अरुन्धती : अतिजवेन दूरमतिक्रान्तः स चपलः कथं दृश्यते? *(प्रविश्य)*

बटवः : पश्यतु कुमारस्तावदाश्चर्यम्।

लवः : दृष्टमवगतं च। नूनमाश्वमेधिकोऽयमश्वः।

बटवः : कथं ज्ञायते?

लवः : ननु मूर्खाः! पठितमेव हि युष्माभिरपि तत्काण्डम्। किं न पश्यथ? प्रत्येकं शतसंख्याः कवचिनो दण्डिनो निषङ्गिणश्च रक्षितारः। यदि च विप्रत्ययस्तत्पृच्छत।

**बटवः** : **भो भोः! किंप्रयोजनोऽयमश्वः परिवृतः पर्यटति?**

**लवः** : *(सस्पृहमात्मगतम्)* **'अश्वमेध' इति नाम विश्वविजयिनां क्षत्रियाणामूर्जस्वलः सर्वक्षत्रपरिभावी महान् उत्कर्षनिकषः।** *(नेपथ्ये)*

**योऽयमश्वः पताकेयमथवा वीरघोषणा ।**
**सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः ॥**

**लवः** : *(सगर्वम्)*। **अहो! संदीपनान्यक्षराणि।**

**बटवः** : **किमुच्यते? प्राज्ञः खलु कुमारः।**

**लवः** : **भो भोः! तत्किमक्षत्रिया पृथिवी? यदेवमुद्घोष्यते?** *(नेपथ्ये)*

**रे, रे, महाराजं प्रति कः क्षत्रियः?**

**लवः** : **धिग् जाल्मान्।**

**यदि नो सन्ति सन्त्येव केयमद्य विभीषिका ।**
**किमुक्तैरेभिरधुना तां पताकां हरामि वः ॥**

**हे बटवः! परिवृत्य लोष्ठैरभिघ्नन्त उपनयतैनमश्वम्। एष रोहितानां मध्येचरो भवतु।**

*(प्रविश्य सक्रोधः)*



**पुरुषः : धिक् चपल! किमुक्तवानसि? तीक्ष्णतरा ह्यायुधश्रेणयः शिशोरपि दृप्तां वाचं न सहन्ते। राजपुत्रश्चन्द्रकेतुर्दुर्दान्तः, सोऽप्यपूर्वारण्यदर्शनाक्षिप्तहृदयो न यावदायाति, तावत् त्वरितमनेन तरुगहनेनापसर्पत।**

**बटवः : कुमार! कृतं कृतमश्वेन। तर्जयन्ति विस्फारितशरासनाः कुमारमायुधीयश्रेणयः। दूरे चाश्रमपदम्। इतस्तदेहि। हरिणप्लुतैः पलायामहे।**

**लवः : किं नाम विस्फुरन्ति शस्त्राणि?**

*(इति धनुरारोपयति)*

## शब्दार्थाः टिप्पण्यश्च

**शिष्टानध्यायः** – शिष्टेषु (आप्तेषु) अनध्यायः शिष्टागमनप्रयुक्तोऽनध्यायः। बड़े लोगों के आने पर अवकाश।

**अस्खलितम्** – अनियन्त्रितम्, बेरोकटोक।

**सुलभसौख्यम्** – सुलभं सौख्यमस्मिन्। इसमें (बचपन में) सुख सुलभ होता है।

**मुग्धललितैः** – मुग्धैः मनोहरैः ललितैः-सुकुमारैः। मनोहर व सुकुमार।

**कुवलयदलस्निग्ध-** – कुवलयम्-नीलकमलम् तस्य दलम्-पत्रम्

**श्यामः** – तस्य इव स्निग्धः-मसृणः श्यामः-कृष्णवर्णः। नील कमल-दल के समान स्निग्ध (चिकना) तथा श्यामवर्ण।

**शिखण्डकमण्डनः** – काकपक्षशोभितः। काकपक्षों (घुँघराले बालों) से अलङ्कृत।

**पुण्यश्रीकः** – पुण्या-अलौकिकी श्री शोभा यस्य। अलौकिक शोभा- सम्पन्न।

**दृशोरमृताञ्जनम्** – दृशोः-नेत्रयोः, अमृताञ्जनम्-अमृतमयम् अञ्जनम्, आँखों में अमृतमय अञ्जन।

**विनयशिशिरः** – विनयेन-विनम्रतया, शिशिरः-शीतलः। विनय से शीतल (महिम्नामतिशयः का विशेषण)।

**मौग्ध्यमसृणः** – मौग्ध्येन-मधुरस्वभावतया, मसृणः-कोमलः सर्वभावुक- जनस्पृहणीयः। मधुर स्वभाव के कारण कोमल, स्पृहणीय।

**विदग्धैः** – सूक्ष्ममतिभिः। विवेकियों के द्वारा।

| | | |
|---|---|---|
| **सम्मोहस्थिरम्** | – | सम्मोहेन–शोकाघातेन, स्थिरम्–जडीभूतमिव, सीता निर्वासन के कारण शोकाघात से संज्ञाशून्य सा जड़। |
| **अयस्कान्तशकलः** | – | अयस्कान्तधातोः–चुम्बकस्य शकलः–अवयवः (खण्डः), चुम्बक का छोटा–सा टुकड़ा। |
| **अविज्ञातवयःक्रमौचित्यात्** | – | अविज्ञातम् वयः क्रमौचित्यम्–अवस्था क्रम (आयु में छोटे बड़े का क्रम) का ज्ञान न होने से। |
| **प्रणामपर्यायः** | – | यथाक्रमं प्रणामपरंपरा। औचित्य क्रम के अनुसार प्रणाम। |
| **उत्सङ्गे** | – | क्रोडे। गोद में। |
| **मांसलोज्ज्वलेन** | – | मांसलेन–परिपुष्टेन बलवता उज्ज्वलेन–प्रकाशयुक्तेन, तेजस्विना। बलिष्ठ और तेजस्वी। |
| **कलहंसघोषघर्घरानुनादिना** | – | कलहंसस्य यो घोषः–शब्दः तस्य अनुनादिना–अनुकारिणा। मधुर कण्ठवाले हंस के स्वर का अनुकरण करने वाले (स्वर से)। |
| **मुखपुण्डरीकम्** | – | मुखमेव पुण्डरीकम्–श्वेतकमलम्, मुखरूपी कमल। |
| **पुण्यानुभावः** | – | पुण्यश्चासौ अनुभावः = पवित्रः–प्रभावः, माहात्म्यम्, पुण्य प्रभाव। "अनुभावः प्रभावे च सतां च मतिनिश्चये।" |
| **अभिव्यज्यते** | – | अभि + वि + अञ्ज् धातु + लट् (कर्मवाच्य), प्रथम पुरुष एकवचन, अभिव्यक्त होता है। |
| **उत्पथैः** | – | उन्मार्गैः। उन्मार्गों से। |
| **पारिप्लवम्** | – | चञ्चलम्। |
| **पशुसमाम्नाये** | – | पशुवर्गवर्णनपरे शास्त्रे, पशुशास्त्र में। |
| **सांग्रामिके** | – | संग्राम वर्णनपरे शास्त्रे, संग्रामशास्त्र में। |
| **धुनोति** | – | धूञ् + लट् + प्रथम पुरुष एकवचन (स्वादिगण, श्नुविकरण), हिलाता रहता है। |
| **अजस्त्रम्** | – | निरन्तरम्, लगातार। |
| **दीर्घग्रीवः** | – | दीर्घा ग्रीवा यस्य सः, जिसकी गर्दन लम्बी है। |
| **प्रकिरति** | – | प्र + कॄ + लट् + प्रथम पुरुष एकवचन (तुदादि, श विकरण), बिखेरता है। त्यागता है। |
| **शकृत्** | – | पुरीषम्। मल। |

| | | |
|---|---|---|
| **आम्रमात्रान्** | – | आम्रफलतुल्यान्। आम के फलों जैसा। |
| **सकौतुकोपरोधविनयम्** | – | कौतुकन, उपरोधेन, विनयेन च सहितम्, कौतूहल, आग्रह और विनय के साथ। |
| **अरण्यगर्भरूपालापैः** | – | अरण्यगर्भाणां–वननिवासिनां (बालकानां) रूपैः– शरीरसौष्ठवैः, आलापैः–वार्ताभिः। वनवासी बालकों के शरीर सौन्दर्य और बातचीत से। |
| **पलायमानम्** | – | परा + अय् + लट् – शानच् आदेश (धातु) "उपसर्गस्यायतो" परा के र् को ल् आदेश द्वितीया एकवचन, दौड़ते हुए को। |
| **दीर्घायुषम्** | – | दीर्घम् आयुः यस्य सः दीर्घायुः, तम्। चिरायु को अश्वमेध यज्ञ सम्बन्धी। |
| **निषङ्गिण** | – | निषङ्गाः सन्ति येषाम् ते निषङ्गिणः। निषङ्ग + इनि, (पुँ.) प्रथमा विभक्ति बहुवचन। तरकसधारी। |
| **विप्रत्ययः** | – | सन्देह, वि + प्रति + इण् धातु + अच् प्रत्यय। |
| **ऊर्जस्वलः** | – | ऊर्जोऽस्यास्तीति ऊर्जस्वलः, ऊर्जस् + वलच्। शक्तिशाली। |
| **सर्वक्षत्रपरिभावी** | – | समस्त (शत्रु) राजाओं को पराजित करने वाली। |
| **उत्कर्षनिकषः** | – | उत्कर्षस्य निकथः, उत्कर्ष की कसौटी। |
| **सप्तलोकैकवीरस्य** | – | सप्तलोकेषु एकवीरस्य, सातों लोकों में एकमात्र वीर का। |
| **दशकण्ठकुलद्विषः** | – | दशकण्ठस्य कुलं द्वेष्टि इति दशकण्ठकुलद्विट्–तस्य। रावण के कुल के द्वेषी। |
| **सन्दीपनान्यक्षराणि** | – | सन्दीपनानि + अक्षराणि। ये अक्षर (कथन) बड़े क्रोधोत्पादक हैं। |
| लोष्ठैः | – | ढेलों से। |
| **अभिघ्नन्तः** | – | अभि + हन् + लट् (शतृ), (पुँ.) प्रथमा विभक्ति बहुवचन, मारते हुए। |
| **रोहितानाम्** | – | मृगों के। |
| **अपूर्वारण्यदर्शनाक्षिप्तहृदयः** | – | अपूर्वारण्यस्य दर्शनेन आक्षिप्तं हृदयं यस्य सः, बहुव्रीहि समास। अपूर्व वन की शोभा देखने में संलग्न मन वाले। |
| **अपसर्पत** | – | अप + सृप् + लोट् + मध्यम पुरुष बहुवचन। भाग जाओ। |

**विस्फारितशरासनाः** – विस्फारितानि शरासनानि यैस्ते। बहुव्रीहि समास। धनुषों को ताने हुए।

**हरिणप्लुतैः** – हरिणानां प्लुतैरिव प्लुतैः। हरिणों की भाँति कूदते हुए।

**पलायामहे** – भाग जाएँ। परा + अय् धातु + लट् + उत्तम पुरुष बहुवचन "उपसर्गस्यायतो" से परा के र् को ल्, भाग चलें।

**विस्फुरन्ति** – वि + स्फुर् + लट् + प्रथम पुरुष बहुवचन, चमक रहे हैं।

**आरोपयति** – (धनुष) चढ़ाता है।

## अभ्यास

**1. संस्कृतेन उत्तरं दीयताम् ।**

(क) 'उत्तररामचरितम्' इति नाटकस्य रचयिता कः?

(ख) नेपथ्ये कोलाहलं श्रुत्वा जनकः किं कथयति?

(ग) लवः रामभद्रं कथमनुसरति?

(घ) बटवः अश्वं कथं वर्णयन्ति?

(ङ) लवः कथं जानाति यत् अयम् आश्वमेधिकः अश्वः?

(च) राजपुरुषस्य तीक्ष्णतरा आयुधश्रेणयः किं न सहन्ते?



**2. रेखाङ्कितपदानि आधृत्य प्रश्ननिर्माणं कुरुत ।**

(क) अश्वेमध इति नाम क्षत्रियाणाम् महान् उत्कर्षनिकषः।

(ख) हे बटवः! लोष्ठैः अभिघ्नन्तः उपनयत एनम् अश्वम्।

(ग) रामभद्रस्य एष दारकः अस्माकं लोचने शीतलयति।

(घ) उत्पथैः मम मनः पारिप्लवं धावति।

(ङ) अतिजवेन दूरमतिक्रान्तः स चपलः दृश्यते।

(च) विस्फारितशरासनाः आयुधीयश्रेणयः कुमारं तर्जयन्ति।

(छ) निपुणं निरूप्यमाणः लवः मुखचन्द्रेण सीतया संवदत्येव।

**3. हिन्दीभाषया सप्रसङ्गव्याख्यां कुरुत ।**

(क) सर्वक्षत्रपरिभावी महान् उत्कर्षनिकषः।

(ख) किं व्याख्यानैर्व्रजति स पुनर्दूरमेह्येहि यामः।

(ग) सुलभसौख्यमिदानीं बालत्वं भवति।

(घ) झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम्?

**4. अधोलिखितानि कथनानि कः कं प्रति कथयति ।**

| | कः | कं प्रति |
|---|---|---|
| (क) अस्ति ते माता? स्मरसि वा तातम्? | ............ | ............ |
| (ख) दिष्ट्या न केवलमुत्सङ्गः मनोरथोऽपि मे पूरितः। | ............ | ............ |
| (ग) वत्सायाश्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते। | ............ | ............ |
| (घ) सोऽयमधुनाऽस्माभिः स्वयं प्रत्यक्षीकृतः। | ............ | ............ |
| (ङ) इतोऽन्यतो भूत्वा प्रेक्षामहे तावत्पलायमानं दीर्घायुषम्। | ............ | ............ |
| (च) धिक् चपल! किमुक्तवानसि। | ............ | ............ |

**5. अधोलिखितवाक्यानां रिक्तस्थानानि निर्देशानुसारं पूरयत ।**

(क) क एष........................रामभद्रस्य मुग्धललितैरङ्गैर्दारकोऽस्माकं लोचने........................ (क्रियापदेन)

(ख) एष ........................ मे सम्मोहनस्थिरमपि मनः हरति। (कर्तृपदेन)

(ग) ........................! इतोऽपि तावदेहि! (सम्बोधनेन)

(घ) 'अश्वोऽश्व' ........................ नाम पशुसमाम्नाये सांग्रामिके च पठ्यते। (अव्ययेन)

(ङ) युष्माभिरपि तत्काण्डं ........................ एव हि। (कृदन्तपदेन)

(च) एष वो लवस्य ........................ प्रणामपर्यायः (करणपदेन)

6. **अधः समस्तपदानां विग्रहाः दत्ताः। उदाहरणमनुसृत्य समस्तपदानि रचयत, समासनामापि च लिखत ।**

**उदाहरणम्- पशूनां समाम्नायः, तस्मिन् पशुसमाम्नाये-षष्ठी तत्पुरुषः**

(क) विनयेन शिशिरः ...................... ......................

(ख) अयस्कान्तस्य शकलः ...................... ......................

(ग) दीर्घा ग्रीवा यस्य सः ...................... ......................

(घ) मुखम् एव पुण्डरीकम् ...................... ......................

(ङ) पुण्यः चासौ अनुभावः ...................... ......................

(च) न स्खलितम् ...................... ......................

7. **अधोलिखितपारिभाषिकशब्दानां समुचितार्थेन मेलनं कुरुत ।**

| | |
|---|---|
| (क) नेपथ्ये | (क) प्रकटरूप में |
| (ख) आत्मगतम् | (ख) देखकर |
| (ग) प्रकाशम् | (ग) पर्दे के पीछे |
| (घ) निरूप्य | (घ) अपने मन में |
| (ङ) उत्सङ्गे गृहीत्वा | (ङ) प्रवेश करके |
| (च) प्रविश्य | (च) अपने मन में |
| (छ) सगर्वम् | (छ) गोद में बिठा कर |
| (ज) स्वगतम् | (ज) गर्व के साथ |

8. **पाठमाश्रित्य हिन्दीभाषया लवस्य चारित्रिकवैशिष्ट्यं लिखत ।**

9. **अधोलिखितेषु श्लोकेषु छन्दोनिर्देशः क्रियताम्-**

(क) महिम्नामेतस्मिन् विनयशिशिरो मौग्ध्यमसृणो।

(ख) वत्सायाश्च रघूद्वहस्य च शिशावमिस्मन्नभिव्यज्यते।

(ग) पश्चात्पुच्छं वहति विपुलं तच्च धुनोत्यजस्रम्।

10. **पाठमाश्रित्य उत्प्रेक्षालङ्कारस्य उपमालङ्कारस्य च उदाहरणं लिखत ।**

# योग्यताविस्तारः

(क) भवभूतिः संस्कृतसाहित्यस्य प्रमुखो महाकविरासीत्।

''कविर्वाक्पतिराजश्रीभवभूत्यादिसेवितः।

जितो ययौ यशोवर्मा तद्गुणस्तुतिवन्दिताम्।।'' इति कल्हणरचितराजतरङ्गिणीस्थश्लोकेन परिज्ञायते यदयम् अष्टमशताब्द्यां वर्तमानस्य कान्यकुब्जेश्वरस्य यशोवर्मणः समसामयिक आसीत्।

अनेन महाकविना त्रीणि नाटकानि रचितानि–

मालतीमाधवम्, महावीरचरितम् उत्तररामचरितं च।

उत्तररामचरितं भवभूतेः सर्वोत्कृष्टा रचनास्तीति विद्वत्समुदाये इयमुक्तिः प्रसिद्धा वर्तते

''उत्तरे रामचरिते भवभूतिर्विशिष्यते।''

अस्य नाटकस्य कथावस्तु रामायणाधारितमस्ति। अत्र श्रीरामस्य राज्याभिषेकानन्तरमुत्तरं चरितं वर्णितम्, पूर्वचरितन्तु भवभूतिविरचिते महावीरचरिते प्रतिपादितम्। अत एव उत्तरं रामस्य चरितं यस्मिन् तत् उत्तररामचरितम्। अथवा उत्तरम् = उत्कृष्टं रामस्य चरितं यस्मिन् तत् उत्तररामचरितम् इति नाटकस्य नामकरणं समीचीनं वर्तते। सीतापरित्यागेनात्र रामस्योत्कृष्टराज्यधर्मपालनव्रतत्वं सूच्यते।

यद्यपि भवभूतिः करुणरसस्याभिव्यक्तये सविशेषं प्रशस्यते, परन्तु प्रस्तुते नाट्यांशे वात्सल्यस्य भावः मर्मस्पृशं प्रकटितः। तथैव हास्यरसस्यापि रुचिरा अभिव्यक्तिरत्र सञ्जाता।

(ख) **अश्वमेधः** – अश्वमेधयज्ञः प्राचीनकाले राज्यविस्ताराय राष्ट्र-समृद्धये च करणीयः यज्ञः आसीत्। अस्मिन् यज्ञे राज्ञां बलस्य पराक्रमस्य च परीक्षा भवति स्म। यज्ञकर्ता नृपः स्वराष्ट्रियप्रतीकमश्वं च सैन्यबलैः सह भूमण्डल-भ्रमणाय प्रेषयति स्म। यो नृपः स्वराज्ये समागतमश्वं निर्बाधं गन्तु प्रादिशत्, स यज्ञकर्त्रे राज्ञे करदेयतां स्वीकरोति स्म। यः तमश्वमरुणत् स आश्वमेधिक-नृपस्याधीनतां नाङ्गीकरोति स्म। तदा उभयोर्बलयोर्मध्ये युद्धं भवति स्म तत्रैव च नृपाणां पराक्रमः परीक्ष्यते स्म। शतपथब्राह्मणे राष्ट्रार्थे प्रयुक्तम्–

'राष्ट्रं वै अश्वः' इति।

(ग) 'बालकौतुकम्' इतिपाठस्य साभिनयं नाट्यप्रयोगं कुरुत।

(घ) गुरुकुलपरम्परायां बालकानां कृते गुरून् प्रति अभिवादनस्य कीदृशः शिष्टाचारः अत्र चित्रितः इति निरूप्यताम्। तथैव गुरवः कथम् आशीर्वचांसि अयच्छन् इत्यपि ज्ञेयम्।


12078CH04

## चतुर्थः पाठः

# कर्मगौरवम्

प्रस्तुत पाठ, श्रीमद्भगवद्गीता के द्वितीय एवम् तृतीय अध्यायों से संगृहीत है। श्रीमद्भगवद्गीता वह विश्वप्रसिद्ध ग्रन्थरत्न है, जिसमें श्रीकृष्ण ने विषादग्रस्त अर्जुन को कर्त्तव्य का उपदेश देकर धर्मरक्षार्थ युद्ध के लिए प्रेरित किया था। कर्मों में कुशलता को ही योग बताया गया है। अतः सभी को निःसंगभाव से सदा सर्वहित के कार्यों में संलग्न रहना चाहिए। यही उपनिषदों का भी सन्देश है-कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।



**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥1॥**

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः।**
**शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥2॥**

न कर्मणामनारम्भान्नैष्कर्म्यम् पुरुषोऽश्नुते।
न च सन्न्यसनादेव सिद्धिं समधिगच्छति ॥3॥

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥4॥

तस्मादसक्तः सततं कार्यं कर्म समाचर।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥5॥

कर्मणैव हि संसिद्धिमास्थिता जनकादयः।
लोकसङ्ग्रहमेवापि सम्पश्यन्कर्तुमर्हसि ॥6॥

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥7॥

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥8॥

यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते॥9॥

सुखदुःखसमे कृत्वा लाभालाभौ जयाजयौ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि॥10॥

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः।
स सन्यासी च योगी च न निरग्निर्न चाक्रियः॥11॥

**सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत।**
**कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम्॥12॥**

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि॥13॥**

## शब्दार्थाः टिप्पण्यश्च

| | | |
|---|---|---|
| **जहातीह** | – | जहाति+इह, हा धातु+लट्+प्रथम पुरुष एकवचन, यहाँ, (इस लोक में) त्याग देता है। |
| **सुकृतदुष्कृते** | – | सुकृतं च दुष्कृतं च, द्वन्द्व समास, पुण्य और पाप। |
| **युज्यस्व** | – | युज् धातु (आत्मनेपद)+लोट्+मध्यम पुरुष एकवचन, प्रयत्न करो। |
| **आस्थिताः** | – | आङ्+स्था धातु+क्त, प्रथम पुरुष बहुवचन, प्राप्त हुए थे। |
| **लोकङ्ग्हमेवापि** | – | लोकसंग्रहम्+एव+अपि, लोकसंग्रह को भी। |
| **अर्हसि** | – | अर्ह् धातु+लट्+मध्यम पुरुष एकवचन, योग्य हो। |
| **आचरति** | – | आङ्+चर् धातु+लट्+प्रथम पुरुष एकवचन, आचरण करता है। |
| **इतरः** | – | अन्य लोग, सब लोग। |
| **अनुवर्तते** | – | अनु+वृत् धातु+लट्+प्रथम पुरुष एकवचन, अनुसरण करता है। |
| **न जनयेत्** | – | जन् धातु+णिच्+विधिलिङ्+प्रथम पुरुष एकवचन, उत्पन्न नहीं करना चाहिए। |
| **कर्मसङ्गिनाम्** | – | कर्म मे आसक्त मनुष्यों का। |
| **जोषयेत्** | – | जुष् धातु+णिच्, विधिलिङ्+प्रथम पुरुष एकवचन, करवाना चाहिए, लगना चाहिए। |
| **कुरु** | – | डुकृञ्+(परस्मैपद) लोट्+मध्यम पुरुष एकवचन, करो। |
| **ज्यायः** | – | प्रशस्य+ईयसुन्, नपुं + प्रथम विभक्ति एकवचन, श्रेष्ठ है। |
| **ह्यकर्मणः** | – | हि+अकर्मणः, क्योंकि कर्म न करने से। |
| **शरीरयात्रापि** | – | लौकिकव्यवहारः (शरीरयात्रा+अपि) शरीर–निर्वाह भी। |
| **प्रसिद्ध्येदकर्मणः** | – | प्रसिद्ध्येत्+अकर्मणः,कर्म न करने से सिद्ध नहीं होगा। |
| **कर्मणामनारम्भान्नैष्कर्म्यम्** | – | कर्मणाम्+अन्+आरम्भात्+नैष्कर्म्यम्, कर्मों का आरम्भ किये बिना निष्कर्मता को। |

| | | |
|---|---|---|
| **अश्नुते** | – | अश् लट् प्रथम पुरुष एकवचन, प्राप्त करता है। |
| **समधिगच्छति** | – | सम्+अधि+गम् धातु+लट्+प्रथम पुरुष एकवचन, प्राप्त करता है। |
| **जातु** | – | (अव्यय), कभी। |
| **न तिष्ठत्यकर्मकृत्** | – | तिष्ठति+अकर्मकृत्, कर्म किये बिना नहीं रहता। |
| **समाचर** | – | सम्+आङ्+चर् धातु+लोट् मध्यम पुरुष एकवचन, भलीभाँति करो। |
| **असक्तः** | – | सञ्ज् धातु+क्त सक्तः न सक्तः असक्तः, नञ् तत्पुरुष समास, अनासक्त होकर। |
| **आचरन्** | – | आङ्+चर्+शतृ, प्रथमा एकवचन, करता हुआ। |
| **आप्नोति** | – | आप् धातु+लट्+प्रथम पुरुष एकवचन, प्राप्त करता है। |
| **चिकीर्षु** | – | कर्त्तुम् इच्छुः, डूकृञ् धातु सन् प्रत्यय (सनाद्यन्ताधातवः)करने का इच्छुक। |
| **असक्तः** | – | सञ्ज् परिज़्वङ्गे, न सक्तः असक्तः, उदासीन, अनासक्त, न लगा हुआ। |
| **अनाश्रितः** | – | अन्–आ श्रि श्रयणे, प्रथम पुरूष, एकवचन, सहारे न रहने वाला, आसरा न चाहने वाला। |
| **निरग्निः** | – | निर्–अभाव, अग्नि, अग्नि रहित। |
| **यदृच्छालाभः** | – | जो कुछ भी मिल जाए। |
| **द्वन्द्वातीतः** | – | द्विष्ठाब्दस्य द्वित्वम् पूर्वपदस्य अभावः, उत्तरपदस्य नपुंसकत्व, अति+इ+क्त (द्वन्द्वान् अतीतः) सुख–दुख, हानि–लाभ से परे। |
| **विमत्सरः** | – | विगतः मत्सरो यस्य, ईर्ष्या से मुक्त। |
| **सिद्धावसिद्धौ** | – | (सिध्+क्त) सिद्धौ असिद्धौ च, सफलता और असफलता में। |
| **निबध्यते** | – | (नि+बंध्+क्त) आत्मनेपदम्, एकवचने, कसकर बंधा या बाँधा जाता है। |
| **लाभालाभौ** | – | (लभ्+घञ्) लाभः च अलाभः च, लाभ–हानि |
| **युज्यस्व** | – | युज् योगे, युक्त हो जा, लग जा। |
| **कर्मण्येवाधिकारस्ते** | – | (कृ+मनिन्) सप्तमी विभक्ति एकवचने कर्मणि, एव अधिकारः ते, कर्म में ही तुम्हारा अधिकार है। |
| **सङ्गोऽस्त्वकर्मणि** | – | सङ्गः अस्तु अकर्मणि, (सञ्ज् भावे घञ्–सङ्गः) अकर्म के प्रति लगाव, दोस्ती। |

## अभ्यासः

1. **संस्कृतभाषया उत्तरत ।**

(क) अयं पाठः कस्मात् ग्रन्थात् सङ्कलितः?
(ख) अकर्मणः किं ज्यायः?
(ग) जनकादयः केन सिद्धिम् आस्थिताः?
(घ) लोकः कम् अनुवर्तते?
(ङ) बुद्धियुक्तः अस्मिन् संसारे के जहाति?
(च) केषाम् अनारम्भात् पुरुषः नैष्कर्म्यं प्राप्नोति?
(छ) कः सन्यासी कथ्यते?
(ज) लोक संग्रहम् चिकीर्षु विद्वान् किं कुर्यात्?
(झ) जनः किं कृत्वापि न निबध्यते?

2. **नियतं कुरु कर्म त्वं ..... प्रसिद्ध्येदकर्मणः अस्य श्लोकस्य भावार्थं कुरुत ।**

3. **'यद्यदाचरति ..... लोकस्तदनुवर्तते' अस्य श्लोकस्य अन्वयं लिखत ।**

4. **अधोलिखितानां शब्दानां विलोमान् पाठात् चित्वा लिखत ।**

**यथा- वशः – अवशः**

(क) बुद्धिहीनः – ..................
(ख) दुष्कृतम् – ..................
(ग) अकौशलम् – ..................
(घ) न्यूनः – ..................
(ङ) कर्मणः – ..................
(च) दुर्गुणैः – ..................
(छ) कदाचित् – ..................
(ज) निकृष्टः – ..................
(झ) लाभः – ..................

(ङ) सक्तः – ..................

(ट) सक्रियः – ..................

(ठ) असन्तुष्ट – ..................

**5.अ. अधोलिखतेषु पदेषु सन्धिविच्छेदं कुरुत ।**

जहातीह, ह्यकर्मणः, शरीरयात्रापि, पुरुषोऽश्नुते, तिष्ठत्यकर्मकृत्, प्रकृतिजैर्गुणैः, कर्मणैव, लोकस्तदनुवर्तते, जनयेद्ज्ञानाम्, कृत्वापि, कर्मण्यविद्वांसः, सङ्गोऽस्त्वकर्मणि

**आ. अधोलिखितक्रियापदानां लकारपुरुषवचननिर्देशं कुरुत ।**

जहाति, युज्यस्व, कुरु, अश्नुते, समधिगच्छति, तिष्ठति, आप्नोति, अनुवर्तते, जनयेत्, जोषयेत्।

**6. अधोलिखतवाक्येषु रेखाङ्कितपदानां विभक्तीनां निर्देशं कुरुत ।**

(क) योगः कर्मसु कौशलम्।

(ख) जीवने नियतं <u>कर्म</u> कुरु।

(ग) <u>कर्मणा</u> एव जनकादयः संसिद्धिम् आस्थिताः।

(घ) <u>अकर्मणः</u> कर्म ज्यायः।

(ङ) <u>कर्मणाम्</u> अनारम्भात् पुरुषः नैष्कर्म्यं न अश्नुते।

(च) ततो <u>युद्धाय</u> युज्यस्व

(छ) <u>कर्मणि</u> एव अधिकारस्ते।

(ज) सक्ताः कर्मणि <u>अविद्वांसः</u>

**7. प्रदत्तमञ्जूषायाः समुचितपदानां चयनं कृत्वा अधोदत्तशब्दानां प्रत्येकपदस्य त्रीणि समानार्थकपदानि लिखन्तु ।**

अनारतम्, मनीषा, गात्रम्, दुष्कर्म, प्राज्ञः, कलुषम्, शेमुषी, अविरतम्, कोविदः, कायः, मतिः, पातकम्, देहः, मनीषी, अश्रान्तम्

(क) विद्वान् .................. .................. ..................

(ख) शरीरम् .................. .................. ..................

(ग) बुद्धिः .................. .................. ..................

(घ) सततम् .................. .................. ..................

(ङ) दुष्कृतम् .................. .................. ..................

**8.अ. कर्म आश्रित्य संस्कृतभाषायां पञ्च वाक्यानि लिखत ।**

**आ. भावस्पष्टं कुरूत–**

यदृच्छालाभसन्तुष्टः

चिकीर्षु लोकसंग्रहम्

मा तो सङ्गस्त्वकर्मणि

**9. पाठे प्रयुक्तस्य छन्दसः नाम लिखत ।**

## योग्यताविस्तारः



**अधोलिखितानां सूक्तीनामध्ययनं कृत्वा प्रस्तुतपाठेन भावसाम्यम् अवधत्त ।**

**(1) गच्छन् पिपीलको याति योजनानां शतान्यपि।**
**अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति।।**

**(2) उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः।**
**न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः।।**

*पञ्चतन्त्रम् / मित्रसम्प्राप्ति – 129*

**(3) कर्मणा जायते सर्वं, कर्मैव गतिसाधनम्।**
**तस्मात् सर्वप्रयत्नेन, साधु कर्म समाचरेत्।।**

*विष्णुपुराण – 1/18/32*

**(4) चरन्वै मधु विन्दति, चरन् स्वादुमुदम्बरम्।**
**सूर्यस्य पश्य श्रेमाणं, यो न तन्द्रयते चरन्।।**

*ऐतरेय ब्राह्मण – 33.3.5*

(5) **जलबिन्दुनिपातेन क्रमशः पूर्यते घटः।**
**स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च॥**

*चाणक्यनीति - 12/22*

(6) **दुष्कराण्यपि कार्याणि, सिध्यन्ति प्रोद्यमेन वै।**
**शिलापि तनुतां याति, प्रपातेनार्णसो मुहुः॥**

*बुद्धचरितम् - 26/63*

(7) **कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।**
**एवं त्वयि नान्यथेतोऽस्ति, न कर्म लिप्यते नरे॥**

*यजुर्वेद - 40/2 7*

**अधोलिखितादर्शवाक्यानि सम्बद्धसंस्थाभिः योजयत ।**

| **आदर्शवाक्यम्** | **संस्था** |
|---|---|
| (क) सत्यमेव जयते | राष्ट्रीय शैक्षिक अनुसंधान और प्रशिक्षण परिषद् |
| (ख) विद्ययाऽमृतमश्नुते | भारतसर्वकारः |
| (ग) असतो मा सद्गमय | कतिपयविद्यालयेषु |
| (घ) सा विद्या या विमुक्तये | केन्द्रीयमाध्यामिक शिक्षा परिषद् |
| (ङ) योगः कर्मसु कौशलम् | राष्ट्रीय अध्यापक शिक्षा परिषद् |
| (च) गुरुः गुरुतमो धामः | भारतीय प्रशासनिक सेवा अकादमी, मसूरी |
| (छ) तत्वं पूषन्नपावृणु | डाकतारविभागः |
| (ज) अहर्निशं सेवामहे | केन्द्रीय विद्यालय संगठन |
| (झ) श्रम एव जयते | भारतस्य सर्वोच्च न्यायालयः |
| (ञ) यतो धर्मस्ततो जयः | श्रममंत्रालयः |

**अधोनिर्मिततालिकां दृष्ट्वा समस्तपदैः सह विग्रहान् मेलयत ।**

(2) अ व शः

(4) स र्व क र्मा णि

(5) क र्म र तः

(6) अ ना र म् भा त्

अ क र्म णः

(7) क र्म फ ल हे तुः

(8) श री र या त्रा

(11) अ च र न्

(1) बु द् ध यु क् तः

(10) अ स क् तः

अ ज्ञा ना ना म्

(3) बु द् ध भे द म्

(9) लो क सं ग्र ह म्

(12) क र्म स ङ्ग ना म्

(13) सु कृ त दु ष् कृ ते



**विग्रहाः**

(1) बुद्ध्या युक्तः (तृतीया तत्पुरुषः)

(2) न वशः (नञ् तत्पुरुषः समास)

(3) बुद्धेः भेदम् (षष्ठी तत्पुरुषः समास)

(4) सर्वाणि कर्माणि (कर्मधारय समास)

(5) कर्मणि रतः (सप्तमी तत्पुरुष समास)

(6) (अ) न कर्मणः (नञ् तत्पुरुष)

(ब) न आरम्भात् (नञ् तत्पुरुष)

(7) कर्मफलस्य हेतुः (षष्ठी तत्पुरुष समास)
(8) शरीरस्य यात्रा (षष्ठी तत्पुरुष समास)
(9) लोकाय संग्रहम् (चतुर्थी तत्पुरुष समास)
(10) (अ) न सक्तः (नञ् तत्पुरुष)
(ब) न ज्ञानानाम् (नञ् तत्पुरुष)
(11) न चरन् (नञ् तत्पुरुष)
(12) कर्मसु सङ्गिनाम् (सप्तमी तत्पुरुष)
(13) सुकृतम् दृष्कृतम् च (द्वन्द्व समास)

## श्रीमद्भगवद्गीता

श्रीमद्भगवद्गीता महाभारतस्य भीष्मपर्वणि विद्यते। अत्र सप्तशतश्लोकाः अष्टादशाध्यायेषु उपनिबद्धाः सन्ति। युद्धभूमौ विषादग्रस्तार्जुनाय निष्कामकर्मणः उपदेशं प्रयच्छता भगवता श्रीकृष्णेन अत्र ज्ञान-भक्ति-कर्मणां समन्वयः प्रस्तुतः।

पूर्ववर्तिनः अनेके मनीषिणः जीवने उदात्तगुणानां विकासार्थं गीताशास्त्रेण प्रेरणां प्राप्तवन्तः। तेषु विद्वत्सु लोकमान्यतिलकः, महर्षि अरविन्दः, महात्मागान्धी, विनोबाभावे इत्यादयः प्रमुखाः सन्ति। एतैः विद्वद्भिः गीताशास्त्रस्य स्वभावाभिव्यक्तिस्वरूपाः व्याख्याः विलिखिताः। गीताशास्त्रस्य ज्ञान-भक्ति-कर्मयोगान् स्वजीवने अवतारयन्तः उन्नतादर्शान् उदात्तजीवनमूल्यान् एते मनीषिणः चरितार्थयन्ति स्म।

श्रीमद्भगवद्गीतायाः केचन अन्येऽपि श्लोका उद्धरणीयाः। तद्यथा-

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जयः।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते॥**

**न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥**

**सन्यासः कर्मयोगश्च निःश्रेयशकरावुभौ।**
**तयोऽस्तु कर्मसन्यासात्कर्मयोगो विशिष्यते॥**

**कर्मण सुकृतस्याहुः सात्विकं निर्मलं फलम्।**
**रजसस्तु फलं दुखमज्ञानं तमसः फलम्॥**

**एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः।**
**कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम्॥**

अनेकैः कविभिः गीतायाः महत्त्वं प्रतिपादितम्। तन्महत्त्वं यत्र-तत्र अध्येतव्यम्। उदाहरणार्थम्-

**मलनिर्मोचनं पुंसां जलस्नानं दिने दिने।**
**सकृद्गीताम्भसि स्नानं संसारमलनाशनम्॥**

**अधोलिखितानां पदानामाशयोऽन्वेष्टव्यः-**

लोकसङ्ग्रहम्, नैष्कर्म्यम्, प्रकृतिजः, सन्न्यसनम्








## पञ्चमः पाठः

# शुकनासोपदेशः

महाकवि बाणभट्ट संस्कृत के सर्वाधिक प्रतिभाशाली गद्यकार हैं। इन्होंने कान्यकुब्ज (कन्नौज) के राजा हर्षवर्धन के जीवन पर 'हर्षचरित' लिखा है। हर्षवर्द्धन का राज्यकाल 606 ई. से 648 ई. तक रहा। अत: बाणभट्ट का भी यही समय होना चाहिये। इनकी दो रचनाएँ सुप्रसिद्ध हैं– हर्षचरित और कादम्बरी।

हर्षचरित बाणभट्ट की प्रथम गद्य कृति है। स्वयं बाणभट्ट ने इसे आख्यायिका कहा है। कादम्बरी संस्कृत साहित्य का सर्वोत्कृष्ट गद्य काव्य है। यह 'कथा' श्रेणी का काव्य है। चन्द्रापीड–कादम्बरी तथा पुण्डरीक–महाश्वेता के प्रणय का चित्रण करने वाली कथा 'कादम्बरी' के दो भाग हैं। इसका कथानक जटिल होते हुए भी मनोरम है। इसमें कथा का प्रारम्भ राजा शूद्रक के वर्णन से होता है। शूद्रक के यहाँ चाण्डालकन्या वैशम्पायन नामक शुक को लेकर पहुँचती है। शुक सभा में आत्म–वृत्तान्त सुनाता है। इस ग्रन्थ में तीन–तीन जन्मों की घटनाएँ गुम्फित हैं।



प्रस्तुत पाठ 'कादम्बरी' के शुकनासोपदेशः नामक गद्यांश से लिया गया है। इस अंश का नायक राजकुमार चन्द्रापीड है, जो सत्व, शौर्य और आर्जव भावों से युक्त है। शुकनास एक अनुभवी मन्त्री हैं जो राजकुमार चन्द्रापीड को राज्याभिषेक के पूर्व वात्सल्यभाव से उपदेश देते हैं। वे उसे युवावस्था में सुलभ रूप, यौवन, प्रभुता एवं ऐश्वर्य से उद्भूत दोषों के विषय में सावधान कर देना उचित समझते हैं। इसे युवावस्था में प्रवेश कर रहे समस्त युवकों को प्रदत्त 'दीक्षान्त भाषण' कहा जा सकता है।

एवं समतिक्रामत्सु दिवसेषु राजा चन्द्रापीडस्य यौवराज्याभिषेकं चिकीर्षुः प्रतीहारानुपकरण- सम्भारसंङ्ग्रहार्थमादिदेश। समुपस्थितयौवराज्याभिषेकं च तं कदाचिद् दर्शनार्थमागतमारूढविनयमपि विनीततरमिच्छन् कर्तुं शुकनासः सविस्तरमुवाच–



"तात! चन्द्रापीड! विदितवेदितव्यस्याधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति। केवलं च निसर्गत एवातिगहनं तमो यौवनप्रभवम्। अपरिणामोपशमो दारुणो लक्ष्मीमदः। अप्रबोधा घोरा च राज्यसुखसन्निपातनिद्रा भवति, इत्यतः विस्तरेणाभिधीयसे।

गर्भे श्वरत्वमभिनवयौवनत्वम्, अप्रतिमरूपत्वममानुषशक्तित्वञ्चेति महतीयं खल्वनर्थ- परम्परा। यौवनारम्भे च प्रायः शास्त्रजलप्रक्षालन-निर्मलापि कालुष्यमुपयाति बुद्धिः। नाशयति च पुरुषमत्यासङ्गो विषयेषु।

भवादृशा एव भवन्ति भाजनान्युपदेशानाम्। अपगतमले हि मनसि विशन्ति सुखेनोपदेशगुणाः। हरति अतिमलिनमपि दोषजातं गुरूपदेशः गुरूपदेशश्च नाम अखिलमलप्रक्षालनक्षमम् अजलं स्नानम्। विशेषेण तु राज्ञाम्। विरला हि तेषामुपदेष्टारः। राजवचनमनुगच्छति जनो भयात्। उपदिश्यमानमपि ते न शृण्वन्ति। अवधीरयन्तः खेदयन्ति हितोपदेशदायिनो गुरून्।

आलोकयतु तावत् कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम्। न ह्येवं विधमपरिचितमिह जगति किञ्चिदस्ति यथेयमनार्या। लब्धापि खलु दुःखेन परिपाल्यते। परिपालितापि प्रपलायते। न परिचयं रक्षति। नाभिजनमीक्षते। न रूपमालोकयते। न कुलक्रममनुवर्तते। न शीलं पश्यति। न वैदग्ध्यं गणयति। न श्रुतमाकर्णयति। न धर्ममनुरुध्यते। न त्यागमाद्रियते। न विशेषज्ञतां विचारयति। नाचारं पालयति। न सत्यमवबुध्यते। पश्यत एव नश्यति। सरस्वतीपरिगृहीतं नालिङ्गति जनम्। गुणवन्तं न स्पृशति। सुजनं न पश्यति। शूरं कण्टकमिव परिहरति। दातारं दुःस्वप्नमिव न स्मरति। विनीतं नोपसर्पति। तृष्णां संवर्धयति। लघिमानमापादयति। एवं विधयापि चानया कथमपि दैववशेन परिगृहीताः विक्लवाः भवन्ति राजानः, सर्वाविनयाधिष्ठानतां च गच्छन्ति।

अपरे तु स्वार्थनिष्पादनपरैः दोषानपि गुणपक्षमध्यारोपयद्भिः प्रतारणकुशलैर्धूर्त्तैः प्रतार्यमाणा वित्तमदमत्तचित्ता सर्वजनोपहास्यतामुपयान्ति। न मानयन्ति मान्यान्, जरावैक्लव्यप्रलपितमिति पश्यन्ति वृद्धोपदेशम्। कुप्यन्ति हितवादिने। सर्वथा तमभिनन्दन्ति, तं संवर्धयन्ति, तस्य वचनं शृण्वन्ति, तं बहु मन्यन्ते योऽहर्निशम् अनवरतं विगतान्यकर्त्तव्यः स्तौति, यो वा माहात्म्यमुद्भावयति।

तदतिकुटिलचेष्टादारुणे राज्यतन्त्रे, अस्मिन् महामोहकारिणि च यौवने कुमार! तथा प्रयतेथाः यथा नोपहस्यसे जनैः, न निन्द्यसे साधुभिः, न धिक्क्रियसे गुरुभिः, नोपालभ्यसे सुहृद्भिः, न वञ्च्यसे धूर्तैः, न विडम्ब्यसे लक्ष्म्या, नाक्षिप्यसे विषयैः, नापह्रियसे सुखेन।

इदमेव च पुनः पुनरभिधीयसे–विद्वांसमपि सचेतसमपि, महासत्त्वमपि, अभिजातमपि, धीरमपि, प्रयत्नवन्तमपि पुरुषं दुर्विनीता खलीकरोति लक्ष्मीरित्येता-वदभिधायोपशशाम।

**चन्द्रापीडस्ताभिरुपदेशवाग्भिः प्रक्षालित इव, उन्मीलित इव, स्वच्छीकृत इव, पवित्रीकृत इव, उद्भासित इव, प्रीतहृदयो स्वभवनमाजगाम।**

## शब्दार्थाः टिप्पण्यश्च

**चिकीर्षुः** – करने की इच्छावाला, कर्तुमिच्छुः, कृ + सन् + उ + प्रथमा विभक्ति एकवचन।

**विनय** – विशिष्ट नय (नीति)

**प्रतीहारान्** – द्वारपालों को

**उपकरणसम्भारसङ्ग्रहार्थम्** – आवश्यक सामग्री-समूह के संग्रह के लिए, उपक्रियन्ते एभिः इति उपकरणानि, उपकरणानाम् सम्भारः = उपकरणसम्भारः (षष्ठी तत्पुरुष) उपकरणसम्भारस्य सङ्ग्रहार्थम्। उप + कृ + ल्युट् = उपकरणम्, सम्भारः = सम् + भृ + घञ्।

**निसर्गतः** – स्वाभाविक रूप से।

**अपरिणामोपशमः** – वृद्धावस्था में भी न शान्त होने वाला। परिणामे उपशमः परिणामोपशमः। न परिणामोपशमः अपरिणामोपशमः (नञ् तत्पुरुष)।

**विदितवेदितव्यस्य** – विदितम् वेदितव्यम् येन असौ विदितवेदितव्यः तस्य (बहुव्रीहि), विद् + क्त = विदितम्, विद् + तव्यत् = वेदितव्यम्।

**गर्भेश्वरत्वम्** – जन्म से प्राप्त प्रभुत्व। गर्भतः एव ईश्वरः = गर्भेश्वरः तस्य भावः गर्भेश्वरत्वम्।

**भवादृशा** – आप जैसे ही, भवत् + दृश् + क्विप्, प्रथमा विभक्ति।

**अपगतमले** – दोषरहित होने पर, अपगतः मलः यस्मात् तत् अपगतमलम् तस्मिन् अपगतमले (पञ्चमी तत्पुरुष)

**उपदेष्टारः** – उपदेश देने वाले, उप + दिश् + तृच् प्रथमा विभक्ति बहुवचन।

**अवधीरयन्तः** – तिरस्कृत करते हुए, अव + धीर + णिच् + शतृ प्रथमा विभक्ति बहुवचन।

**कल्याणाभिनिवेशी** – मङ्गल के अभिलाषी, कल्याणे अभिनिवेष्टुं शीलं यस्य स बहुव्रीहि।

**परिपाल्यते** – रखी जा सकती है, परि + पाल + कर्मणि यक् लट् लकार प्रथम पुरुष एकवचन।

**प्रपलायते** – भाग जाती है।

**वैदग्ध्यम्** – पाण्डित्य को, विदग्धस्य भावो वैदग्ध्यम्, विदग्ध + ष्यञ्।

**अनुरुध्यते** – अनुरोध करती है, अनु + रुध् + लट्, प्रथम पुरुष एकवचन।

**अवबुध्यते** – जान जाती है।

**नोपसर्पति** – समीप नहीं जाती, पार्श्वे न गच्छति।

**संवर्धयति** – बढ़ाती है।

**लघिमानमापादयति** – निम्नता प्रदान करती है, लघिमानम् = लघोर्भावः लघिमा (लघु + इमनिच्) तम् आपादयति = आ + पद् + णिच् + लट् प्रथम पुरुष एकवचन।

**विक्लवाः** – विह्वल-विकल।

**अध्यारोपयद्भिः** – आरोपित करने वाले।

**प्रतारणकुशलैः** – ठगने में कुशल-निपुण, प्रतारणासु कुशलाः प्रतारणकुशलाः तैः, सप्तमी तत्पुरुष।

**प्रतार्यमाणाः** – ठगे गये, प्र + तृ + कर्मणि यक् + शानच् + प्रथमा विभक्ति एकवचन।

**जरावैक्लव्यप्रलपितम्** – वृद्धावस्था की विकलता से निरर्थक वचन के रूप में, जरसः वैक्लव्यं = जरावैक्लव्यम् (षष्ठी तत्पुरुष) तेन प्रलपितम्।

**प्रयतेथाः** – प्रयत्न करिये। प्र + यत् + लिङ्, मध्यम पुरुष एकवचन।

**अभिजातम्** – कुलीन को, अभि + जन् + क्त, द्वितीया विभक्ति एकवचन। प्रशस्तं जातं यस्य स अभिजातः तम् अभिजातम्, बहुव्रीहि समास।

**अभिधीयसे** – कहा जा रहा है अभि + धा + यक् + लट्, मध्यम पुरुष एकवचन।

**खलीकरोति** – दुष्ट बना देती है। न खलम् अखलं, अखलं खलं करोति इति, खल + च्वि + कृ + लट्, प्रथम पुरुष एकवचन।

**उपशशाम** – चुप हो गये, उप + शम् + लिट्, प्रथम पुरुष एकवचन।

| | | |
|---|---|---|
| **प्रक्षालित इव** | – | पूर्णतया धोये हुए। प्र + क्षाल + क्त, प्रथम पुरुष एकवचन। |
| **अहर्निशम्** | – | दिन-रात। |
| **उद्भावयति** | – | प्रकट करता है। उद् + भू + णिच् + लट्, प्रथम पुरुष एकवचन। |
| **नोपालभ्यसे** | – | उलाहना न दिये जाओ। |
| **नोपहस्यसे जनैः** | – | लोगों के द्वारा उपहास के पात्र न बनो, उप + हस् + यक् + लट्, मध्यम पुरुष एकवचन, यहाँ 'उपहस्यसे' क्रिया में कर्मणि यक् प्रत्यय हुआ है। अतः 'जनाः' कर्त्ता के अनुक्त होने से अनुक्त कर्त्ता 'कर्तृकर्मणोस्तृतीया' से तृतीया विभक्ति हो गयी है। |

## अभ्यासः

1. **संस्कृतेन उत्तरं दीयताम् ।**

(क) लक्ष्मीमदः कीदृशः?

(ख) चन्द्रापीडं कः उपदिशति?

(ग) अनर्थपरम्परायाः किं कारणम्?

(घ) कीदृशे मनसि उपदेशगुणाः प्रविशन्ति?

(ङ) लब्धापि दुःखेन का परिपाल्यते?

(च) केषाम् उपदेष्टारः विरलाः सन्ति?

(छ) लक्ष्म्या परिगृहीताः राजानः कीदृशाः भवन्ति?

(ज) वृद्धोपदेशं ते राजानः किमिति पश्यन्ति?

2. **विशेषणानि विशेष्यैः सह योजयत ।**

| **विशेषणम्** | **विशेष्यम्** |
|---|---|
| (क) समतिक्रामत्सु | ते |
| (ख) अधीतशास्त्रस्य | विद्वांसम् |
| (ग) दारुणो | दिवसेषु |

(घ) गहनं तमः दोषजातम्
(ङ) अतिमलिनम् लक्ष्मीमदः
(च) सचेतसम् यौवनप्रभवम्

**3. अधोलिखितपदानि स्वरचित-संस्कृत-वाक्येषु प्रयुङ्ध्वम् ।**

सङ्ग्रहार्थम्, समुपस्थितम्, विनयम्, परिणमयति, शृण्वन्ति, स्पृशति।

**4. अधोलिखितानां पदानां सन्धि-विच्छेदं कुरुत ।**

(क) एवातिगहनम् ............... + ...............
(ख) गर्भेश्वरत्वम् ............... + ...............
(ग) गुरूपदेशः ............... + ...............
(घ) ह्येवम् ............... + ...............
(ङ) नाभिजनम् ............... + ...............
(च) नोपसर्पति ............... + ...............



**5. प्रकृति-प्रत्ययविभागः क्रियताम् ।**

| **शब्दः** | **प्रकृतिः** | **प्रत्ययः** |
|---|---|---|
| (क) चिकीर्षुः | ............... | ............... |
| (ख) उपदेष्टव्यम् | ............... | ............... |
| (ग) ईक्षते | ............... | ............... |
| (घ) बुध्यते | ............... | ............... |
| (ङ) निन्द्यसे | ............... | ............... |
| (च) उपशशाम | ............... | ............... |

**6. समासविग्रहं कुरुत ।**

(क) अमानुषशक्तित्वम् – ...............................
(ख) अत्यासङ्गः – ...............................
(ग) अनार्या – ...............................

(घ) स्वार्थनिष्पादनपरैः – ...............................

(ङ) अहर्निशम् – ...............................

(च) वृद्धोपदेशम् – ...............................

**7. रिक्तस्थानानि पूरयत ।**

(क) लक्ष्मीः ................ न रक्षति।

(ख) ................ दुःस्वप्नमिव न स्मरति।

(ग) सरस्वतीपरिगृहीतं ................ ।

(घ) उपदिश्यमानमपि ................ न शृण्वन्ति।

(ङ) अवधीरयन्तः ................ हितोपदेशदायिनो गुरून्।

(च) तथा प्रयतेथाः ................ नोपहस्यसे जनैः।

(छ) चन्द्रापीडः प्रीतहृदयो ................ आजगाम।

**8. सप्रसङ्गं हिन्दीभाषया व्याख्या कार्या ।**

(क) गर्भेश्वरत्वमभिनवयौवनत्वमप्रतिमरूपत्वममानुषशक्तित्वञ्चेति महतीयं खल्वनर्थपरम्परा।

(ख) हरति अतिमलिनमपि दोषजातं गुरूपदेशः।

(ग) विद्वांसमपि सचेतसमपि, महासत्त्वमपि, अभिजातमपि, धीरमपि, प्रयत्नवन्तमपि पुरुषं दुर्विनीता खलीकरोति लक्ष्मीरिति।



## योग्यताविस्तारः

'उप' उपसर्गपूर्वकात् अतिसर्जनार्थकात् 'दिश्' धातोः 'घञ्' प्रत्यये उपदेशशब्दः निष्पद्यते। समुचितकार्येषु मित्रं, बन्धुं, आश्रितजनं, विद्यार्थिनं वा सन्मार्गे प्रवर्तयितुं केनचित् हितचिन्तकेन सुहृद्वरेण ज्ञानिना वा दीयमानः परामर्शः मार्गनिर्देशः हितवचनं वा 'उपदेश' इति उच्यते। संस्कृतवाङ्मये लोकप्रबोध कानि सदाचारप्रतिपादकानि च सूत्राणि नाना-ग्रन्थेषु, काव्येषु सुभाषितेषु च समुपलभ्यन्ते। तानि उपदेशसूत्राणि बालकान्, युवकान्, प्रौढान्, वृद्धान् विविधेषु क्षेत्रेषु कार्याणि कुर्वतः च अधिकृत्य सामान्येन प्रकारेण प्रणीतानि सन्ति।

अत्र उद्धृते भागे शुकनासोपदेशाख्ये राजकुमारं चन्द्रापीडं प्रति शुकनासस्य उपदेशः सङ्गृहीतः। तथाहि–ऐश्वर्यं, यौवनं, सौन्दर्यं, शक्तिश्चेति प्रत्येकं अनर्थकारणमिति मत्त्वा चन्द्रापीडम् उपदेष्टुं प्रक्रान्तः शुकनासः। यद्यपि चन्द्रापीडः विनीतः गृहीतविद्यश्च तथापि ऐश्वर्यादिभिः अस्य मनः खलीकृतं न भवेत् इति धिया शुकनासः चन्द्रापीडम् उपदिशति। अतः उपदेशोऽयं न केवलं चन्द्रापीडं प्रति अपितु तन्माध्यमेन सर्वेषां जनानां कृतेऽपि।

पञ्चतन्त्रेऽपि यत्र-तत्र ईदृश एव हृदयङ्गमः उपदेशः प्राप्यते। यौवनादिकारणैः सम्भाव्यमानमनर्थं पञ्चतन्त्रम् एवमुल्लिखति–

**यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता।**
**एकैकमप्यनर्थाय किमु यत्र चतुष्टयम्॥**

महाभारतस्य उद्योगपर्वणः भागे विदुरनीतौ अपि एवमभिहितमस्ति–

**अष्टौ गुणाः पुरुषं दीपयन्ति**
**प्रज्ञा च कौल्यं च दमः श्रुतं च।**
**पराक्रमश्चाबहुभाषिता च**
**दानं यथाशक्ति कृतज्ञता च॥**
**न क्रोधिनोऽर्थो न नृशंसमित्रं**
**क्रूरस्य न स्त्री सुखिनो न विद्या।**
**न कामिनो ह्रीरलसस्य न श्रीः**
**सर्वं तु न स्यादनवस्थितस्य॥**

अन्यत्रापि हितोपदेश–नीतिशतकादौ च एवमुपदिष्टम् अस्ति। तत्र-तत्रापि योग्यता विस्तरार्थमवश्यं पठनीयम्।

1. बाणभट्टस्य रीतिः पाञ्चाली रीतिरिति कथ्यते। तस्याः लक्षणम् "शब्दार्थयोः समो गुम्फः पाञ्चालीरीतिरिष्यते"।
2. बाणभट्टस्य गद्ये या लयात्मकता वर्तते, पाठपुरस्सरं तस्याः सन्धानं कार्यम्।

**बाणविषयकसूक्तयः प्रशस्तयश्च**

1. **बाणोच्छिष्टं जगत्सर्वम्।**
2. **केवलोऽपि स्फुरन् बाणः करोति विमदान् कवीन्।**
   **किं पुनः क्लृप्तसन्धानः पुलिन्दकृतसन्निधिः॥** (धनपाल–तिलकमञ्जरी)

3. **सुबन्धुर्बाणभट्ट-श्च कविराज इतित्रयः।**
**वक्रोक्तिमार्गनिपुणा-श्चतुर्थो विद्यते न वा॥** (मङ्खक-श्रीकण्ठचरित)

4. **श्लेषे केचन शब्दगुम्फविषये केचिद्रसे चापरेऽ-**
**लङ्कारे कतिचित्सदर्थविषये चान्ये कथावर्णने।**
**आः सर्वत्र गभीरधीरकविताविन्ध्याटवी चातुरी-**
**सञ्चारी कविकुम्भिकुम्भभिदुरां बाणस्तु पञ्चाननः॥** (चन्द्रदेव-शार्ङ्गधरपद्धति)

5. **शब्दार्थयोः समो गुम्फः पाञ्चालीरीतिरिष्यते।**
**शीलाभट्टारिकावाचि बाणोक्तिषु च सा यदि॥** (राजशेखर-जल्हण-सूक्तिमुक्तावली)

6. **रुचिरस्वरवर्णपदा रसभावती जगन्मनो हरति।**
**सा किं तरुणी? नहि नहि वाणी बाणस्य मधुरशीलस्य॥** (धर्मदास-विदग्धमुखमण्डन)

7. **बाणः कवीनामिह चक्रवर्ती चकास्ति यस्योज्ज्वलवर्णशोभम्।**
**एकातपत्रं भुवि पुण्यभूमिवंशाश्रयं हर्षचरित्रमेव॥** (सोड्ढल)

8. **हृदि लग्नेन बाणेन यन्मन्दोऽपि पदक्रमः।**
**भवेत्कविकुरङ्गाणां चापलं तत्र कारणम्॥** (त्रिलोचन-शार्ङ्गधरपद्धतिः)

9. **यस्याश्चौरश्चिकुरनिकरः कर्णपूरो मयूरो**
**भासो हासः कविकुलगुरुः कालिदासो विलासः।**
**हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः**
**केषां नैषा कथय कविताकामिनी कौतुकाय॥** (जयदेवः प्रसन्नराघवः)








## षष्ठः पाठः

# सूक्तिसुधा

संस्कृत साहित्य में सूक्तियों का समृद्ध भण्डार है। सूक्ति का अर्थ है सुन्दर वचन, सुधा का अर्थ है अमृत, सूक्तिसुधा का अर्थ है सुन्दर वचन रूपी अमृत। इस पाठ में पण्डितराज जगन्नाथ, महाकवि माघ, भारवि, प्रसिद्ध नाटककार भवभूति तथा महाकवि भर्तृहरि की सूक्तियाँ संकलित हैं। ये सूक्तियाँ आज भी हमारे जीवन के लिए बहुमूल्य, उपयोगी एवं पथप्रदर्शक हैं। विभिन्न विषयों से सम्बद्ध सूक्तियाँ निश्चित रूप से छात्रों के लिए उपयोगी सिद्ध होंगी।

प्रस्तुत पाठ के प्रथम, द्वितीय एवं तृतीय श्लोक के रचयिता पण्डितराज जगन्नाथ, चतुर्थ श्लोक के महाकवि माघ, पंचम श्लोक के भवभूति, षष्ठ श्लोक के महाकवि भारवि एवं सप्तम, अष्टम, नवम, दशम, एकादश व द्वादश श्लोकों के रचयिता भर्तृहरि हैं।



**अस्ति यद्यपि सर्वत्र नीरं नीरज-राजितम्।**
**रमते न मरालस्य मानसं मानसं विना ।।1।।**

**नीरक्षीरविवेके हंसालस्यं त्वमेव तनुषे चेत्।**
**विश्वस्मिन्नधुनान्यः कुलव्रतं पालयिष्यति कः ।।2।।**

**तावत् कोकिल विरसान् यापय दिवसान् वनान्तरे निवसन्।**
**यावन्मिलदलिमालः कोऽपि रसालः समुल्लसति ।।3।।**

**नालम्बते दैष्टिकतां न निषीदति पौरुषे।**
**शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ।।4।।**

**न किञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति।**
**तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः।।5।।**

सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः।।6।।

स्वायत्तमेकान्तगुणं विधात्रा विनिर्मितं छादनमज्ञतायाः।
विशेषतः सर्वविदां समाजे विभूषणं मौनमपण्डितानाम् ।।7।।

विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः।
यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम्।।8।।

पापान्निवारयति योजयते हिताय,
गुह्यं निगूहति गुणान् प्रकटीकरोति।
आपद्गतं च न जहाति ददाति काले,
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ।।9।।

मनसि वचसि काये पुण्यपीयूषपूर्णा-
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः।
परगुणपरमाणून् पर्वतीकृत्य नित्यं,
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ।।10।।

केयूराणि न भूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वलाः,
न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्धजाः।
वाण्येका समलङ्करोति पुरुषं या संस्कृता धार्यते,
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ।। 11।।

**यावत्स्वस्थमिदं कलेवरगृहं यावच्च दूरे जरा,**
**यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः।**
**आत्मश्रेयसि तावदेव विदुषा कार्यः प्रयत्नो महान्,**
**प्रोद्दीप्ते भवने च कूपखननं प्रत्युद्यमः कीदृशः ॥12॥**

## शब्दार्थाः टिप्पण्यश्च

| | | |
|---|---|---|
| **नीरजराजितम्** | कमलशोभितम् | कमलों से सुशोभित |
| **मरालस्य** | हंसस्य | हंस का |
| **मानसम्** | मनः मानसरोवरं च | मन एवं मानसरोवर |
| **तनुषे** (तन् + आत्मने. लट्, मध्यम पुरुष एकवचन) | विस्तारयसि | विस्तृत कर रहे हो |
| **विरसान्** | रसरहितान् | रसरहित (शुष्क) |
| **यापय** | व्यतीतं कुरु | व्यतीत करो |
| **निवसन्** (नि + वस् + शतृ) | वासं कुर्वन् | निवास करते हुए |
| **रसालः** | आम्रपादपः | आम का वृक्ष |
| **दैष्टिकतां** | भाग्यत्वं | भाग्यत्व को |
| **निषीदति** | अवलम्बते | आश्रय लेता है। |
| **कुर्वाणः** (कृ + शानच्) | कुर्वन् | करते हुए |
| **सौख्यैः** | सुखपूर्वकैः | सुखों के द्वारा |
| **अपोहति** | दूरीकरोति | दूर करता है। |
| **विदधीत** (वि उपसर्ग + डुधाञ् (धा) विधिलिङ्, प्रथम पुरुष एकवचन) | कुर्वीत | करो |
| **वृणते** | वरणं कुर्वन्ति | वरण करती हैं। |
| **विमृश्यकारिणम्** | विचिन्त्यकारिणम् | विचारकर कार्य करने वाले को |
| **स्वायत्तम्** | निजाधीनं | स्वयं के अधीन |

| | | |
|---|---|---|
| **विधात्रा** | ब्रह्मणा | ब्रह्मा के द्वारा |
| **छादनम्** | आवरणम् | आवरण |
| **सर्वविदाम्** | सर्वज्ञानाम् | सर्वज्ञों के |
| **अभ्युदये** | उन्नतौ | उन्नति में |
| (अभि + उदये, यण् सन्धि) | | |
| **सदसि** | सभायाम् | सभा में |
| (सदस् शब्द नपुं. सप्तमी विभक्ति एकवचन) | | |
| **वाक्पटुता** | वाचि पटुता | वाणी में कुशलता |
| **युधि** | युद्धे | युद्ध में |
| **निगूहति** | आच्छादयति | छिपाता है |
| **जहाति** | त्यजति | छोड़ देता है |
| **वचसि** | वाचि | वाणी में |
| (वचस् सप्तमी विभक्ति एकवचन) | | |
| **प्रीणयन्तः** | प्रसन्नं कुर्वन्तः | प्रसन्न करते हुए |
| **परगुणपरमाणून्** | अन्येषाम् अतिसूक्ष्मान् गुणान् | दूसरों के अति सूक्ष्म गुणों को |
| **पर्वतीकृत्य** | विशालतां नीत्वा | बढ़ा-चढ़ाकर |
| **हृदि** (हृत् शब्द सप्तमी विभक्ति एकवचन) | हृदये | हृदय में |
| **विकसन्तः** | विकासं कुर्वन्तः | खिलते हुए |
| **केयूराणि** | विशिष्टाभूषणानि | बाजूबन्ध, भुजबन्ध |
| **मूर्धजाः** | केशाः | सिर के बाल |
| **क्षीयन्ते** | विनश्यन्ते | नष्ट हो जाते हैं। |
| **कलेवरगृहं** | शरीरस्य गृहं (षष्ठी तत्पु.समास) | शरीर |
| **जरा** | वृद्धत्वं | बुढ़ापा |
| **प्रोद्दीप्ते** | प्रज्ज्वलिते | जलने पर |
| **उद्यमः** | परिश्रम | मेहनत |

# अभ्यासः

**1. संस्कृतभाषया प्रश्नोत्तराणि लिखत ।**

(क) सर्वत्र कीदृशं नीरम् अस्ति?

(ख) मरालस्य मानसं कं विना न रमते।

(ग) विद्वान् कम् अपेक्षते?

(घ) सत्कविः कौ द्वौ अपेक्षते?

(ङ) यः यस्य प्रियः सः तस्य कृते किं भवति?

(च) सहसा किं न विदधीत?

(छ) विधात्रा किं विनिर्मितम्?

(ज) अपण्डितानां विभूषणं किम्?

(झ) महात्मनां प्रकृतिसिद्धं किं भवति?

(ञ) पापात् कः निवारयति?

(ट) सन्तः कान् पर्वतीकुर्वन्ति?

(ठ) कीदृशं भूषणं न क्षीयते?

(ड) कूपखननं कदा न उचितम्?



**2. अधोलिखितपद्यांशानां सप्रसङ्गं हिन्दीभाषया व्याख्या विधेया ।**

(क) वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः।

(ख) क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम्।

(ग) प्रोद्दीप्ते भवने च कूपखननं प्रत्युद्यमः कीदृशः।

**3. रिक्तस्थानपूर्तिः करणीया ।**

(क) सत्कविरिव विद्वान् शब्दार्थौ ............... अपेक्षते।

(ख) सन्तः ............... प्रवदन्ति।

**4. निम्नलिखितश्लोकयोः अन्वयं लिखत ।**

यथा– यद्यपि नीरज–राजितं नीरं सर्वत्र अस्ति। (परं) मरालस्य मानसं मानसं विना न रमते।

(क) नीरक्षीरविवेके …………… ।

(ख) विपदि धैर्यमथाभ्युदये …………… ।

**5. निम्नलिखितशब्दानाम् अर्थं लिखित्वा वाक्यप्रयोगं कुरुत ।**

नीरजम्, रसालः, पौरुषः, विमृश्यकारिणः, जरा।

**6. निम्नलिखितशब्दानां सार्थकं मेलनं क्रियताम् ।**

| | |
|---|---|
| (क) मरालस्य | (*i*) आश्रयते |
| (ख) अवलम्बते | (*ii*) ब्रह्मणा |
| (ग) अधुना | (*iii*) विशदीकृत्य |
| (घ) विधात्रा | (*iv*) हंसस्य |
| (ङ) पर्वतीकृत्य | (*v*) साम्प्रतम् |
| (च) नीरजं | (*vi*) आम्रः |
| (छ) रसालः | (*vii*) विभूतयः |
| (ज) सम्पदः | (*viii*) कमलम् |
| (झ) यशसि | (*ix*) कीर्त्तौ |

**7. अधोलिखितशब्दानां पाठात् विलोमपदं चित्वा लिखत ।**

(क) मूर्खः ……………

(ख) अप्रियः ……………

(ग) पुण्यात् ……………

(घ) यौवनम् ……………

(ङ) उपेक्षते ……………

**8. सन्धिविच्छेदः क्रियताम् ।**

(क) नालम्बते – न + ……………

(ख) विश्वस्मिन्नधुनान्यः – विश्वस्मिन् + …………… + अन्यः

(ग) कोऽपि – कः + ...............

(घ) चाभिरुचिर्व्यसनं – च + ............... + व्यसनम्

(ङ) चन्द्रोज्ज्वलाः – ............... + ...............

9. **(अ) अधोलिखितशब्दानां समासविग्रहः कार्यः ।**

**यथा**–नीरज-राजितम् – नीरजैः राजितम्।

(क) अलिमालः

(ख) वाक्पटुता

(ग) चन्द्रोज्ज्वलाः

(घ) अप्रतिहता

(ङ) वाग्भूषणम्

**(आ) अधोलिखित-विग्रहपदानां समस्तपदानि रचयत ।**

**यथा**–कुलस्य व्रतं ............... कुलव्रतम्

(क) वनस्य अन्तरे ...............

(ख) गुणानां लुब्धाः ...............

(ग) प्रकृत्या सिद्धम् ...............

(घ) उपकारस्य श्रेणिभिः ...............

(ङ) आत्मनः श्रेयसि ...............

10. **अधोलिखितशब्देषु प्रकृतिप्रत्ययानां विभागः करणीयः ।**

**यथा**–राजितम् – राज् + क्त

(क) दैष्टिकतां – ............... + तल्

(ख) कुर्वाणः – ............... + शानच्

(ग) पटुता – पटु + ...............

(घ) सिद्धम् – ............... + क्त

(ङ) विमृश्य – वि + मृश् + ...............

**11. अधोलिखितश्लोकेषु छन्दो निर्दिश्यताम् ।**

**यथा**–अस्ति यद्यपि ............... ।।अनुष्टुप् छन्दः।

(क) तावत् कोकिल ............... समुल्लसति।।

(ख) स्वायत्तमेकान्त ............... मौनमपण्डितानाम्।।

(ग) विपदि धैर्यमथा ............... महात्मनाम्।।

(घ) पापान्निवारयति ............... प्रवदन्ति सन्तः।।

(ङ) केयूराणि न ............... भूषणम्।।

**12. अधोलिखितपङ्क्तिषु कोऽलङ्कारः? लिख्यताम् ।**

(क) शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते।

(ख) वाग्भूषणं भूषणम्।

(ग) निजहृदि विकसन्तः सन्ति सन्तः कियन्तः।

(घ) रमते न मरालस्य मानसं मानसं विना।

(ङ) यावन्मिलदलिमालः कोऽपि रसालः समुल्लसति।



## योग्यताविस्तारः

**(अ) समानार्थकश्लोकाः ।**

1. **हंसः श्वेतो बकः श्वेतः को भेदो बकहंसयोः।**
   **नीरक्षीरविवेके तु हंसो हंसो बको बकः।।**
2. **महाजनस्य संसर्गः कस्य नोन्नतिकारकः।**
   **पद्मपत्रस्थितं वारि धत्ते मुक्ताफलश्रियम्।।**
3. **आत्मार्थे जीवलोकेऽस्मिन् को न जीवति मानवः।**
   **परं परोपकारार्थं यो जीवति स जीवति।।**
4. **अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः।**
   **ज्ञानलवदुर्विदग्धं ब्रह्माऽपि तं नरं न रञ्जयति।।**
5. **यावत्स्वस्थो ह्ययं देहो यावन्मृत्युश्च दूरतः।**
   **तावदात्महितं कुर्यात् प्राणान्ते किं करिष्यति।।**

**(ब) छन्दसां लक्षणोदाहरणानि ।**

1. **शार्दूलविक्रीडितम्-**

**लक्षणम्-''सूर्याश्वैर्मसजास्तताः सगुरवः शार्दूलविक्रीडितम्''।**

**उदाहरणम्**

(*i*) केयूराणि न भूषयन्ति.....। (*ii*) यावत्स्वस्थमिदं कलेवरगृहम्.....।

2. **अनुष्टुप् छन्दः -**

**लक्षणम्-''श्लोके षष्ठं गुरुज्ञेयं सर्वत्र लघु पञ्चमम्।**
**द्विःचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः॥''**

**उदाहरणम्**

अस्ति यद्यपि सर्वत्र नीरं नीरजमण्डितम्.....।

3. **वसन्ततिलका-**

**लक्षणम्-''उक्ता वसन्ततिलका तभजा जगौ गः।''**

**उदाहरणम्**

पापान्निवारयति योजयते हिताय।

4. **उपजातिः-इन्द्रवज्रा उपेन्द्रवज्रा इति वृत्तयोः संयोगेन उपजातिः वृत्तं भवति।**

**लक्षणम्-''स्यादिन्द्रवज्रा यदि तौ जगौ गः।**
**उपेन्द्रवज्रा जतजास्ततो गौ॥''**

**उदाहरणम्**

स्वायत्तमेकान्तगुणं

5. **मालिनी-**

**लक्षणम्-''ननमयययुतेयं मालिनी भोगिलोकैः।''**

**उदाहरणम्**

मनसि वचसि काये पुण्यपीयूषपूर्णा...।

6. **आर्या**

**लक्षणम्-''यस्याः प्रथमे पादे द्वादशमात्रास्तथा तृतीयेऽपि।**
**अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्या॥''**

**उदाहरणम्**

(*i*) नीरक्षीर विवेके ....।

(*ii*) तावत् कोकिल ....।

**आर्याच्छन्दसि विशिष्टः लयः गेयता च भवति।**
**तदनुसारेण आर्यायाः गानस्य अभ्यासः कार्यः।**

**(स) अधोलिखितानाम् हिन्दीभाषायाः आभाणकानां समानार्थकाः संस्कृत पङ्पंक्तयः अन्वेष्टव्याः-**

1. **आग लगने पर कुआँ खोदना**
2. **सबसे भली चुप**
3. **दूध का दूध पानी का पानी**








## सप्तमः पाठः

# विक्रमस्यौदार्यम्

"सिंहासनद्वात्रिंशिका" बत्तीस मनोरञ्जक कथाओं का संग्रह है। इसके केवल गद्यमय, केवल पद्यमय, गद्य–पद्यमय, ये तीन पाठ पाये जाते हैं। संग्रह में स्थित प्रत्येक कथा धारा नगरी के राजा भोज को सुनायी गयी है। अतः इस ग्रन्थ का समय राजा भोज (1018–1063) के अनन्तर ही माना जाता है।

एक टीले की खुदाई करने पर राजा भोज को एक सिंहासन मिला। वह सिंहासन राजा विक्रमादित्य का था। शुभ मुहूर्त में राजा भोज उस सिंहासन पर बैठना चाहता है तो सिंहासन में बनी 32 पुत्तलिकाओं में से प्रत्येक पुत्तलिका राजा विक्रमादित्य के गुणों तथा पराक्रम की एक–एक कथा सुनाकर राजा को सिंहासन पर बैठने से पुनःपुनः रोकती है। प्रत्येक पुत्तलिका ने राजा से यही प्रश्न किया कि 'क्या तुममें विक्रम जैसा गुण है? यदि है तो इस सिंहासन पर बैठ सकते हो अन्यथा नहीं।'

प्रस्तुत पाठ उपर्युक्त 'सिंहासनद्वात्रिंशिका' से ही उद्धृत है। इसमें बताया गया है कि किस प्रकार राजा विक्रम को यह संसार असार प्रतीत होता है। अपने औदार्यवश वे सम्पूर्ण राजकोष को दान करना चाहते हैं। इसके लिए उन्होंने 'सर्वस्वदक्षिणयज्ञ' का अनुष्ठान किया। उस यज्ञ में सब कुछ परित्याग कर दिया। यहाँ तक कि समुद्र की ओर से प्रदान किये गये अद्वितीय चार रत्न भी ब्राह्मण को प्रदान कर दिये। इस प्रकार से विक्रम ने अत्यधिक उदारता का परिचय दिया।

**पुनरपि राजा सिंहासने समुपवेष्टुं गच्छति। ततोऽन्या पुत्तलिका समवदत् "भो राजन्, एतत्सिंहासने तेनैव अध्यासितव्यं यस्य विक्रमतुल्यम् औदार्यमस्ति।" भोजेनोक्तम् " भो पुत्तलिके, कथय तस्यौदार्यम्।" सा वदति, "राजन् यस्त्वर्थिनां पूरयति, तस्येप्सितं देवः सम्पादयति।'' यच्चोक्तम्–**

**उत्साहसम्पन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।**
**शूरं कृतज्ञं दृढनिश्चयं च लक्ष्मीः स्वयं वाञ्छति वासहेतोः ॥**



एवं सकलगुणनिवासः स विक्रमो राजा एकदा स्वमनस्यचिन्तयत्– 'अहो असारोऽयं संसारः, कदा कस्य किं भविष्यतीति न ज्ञायते। यच्चोपार्जितानां वित्तं तदपि दानभोगैर्विना सफलं न भवति। तथा चोक्तम्–

उपार्जितानां वित्तानां त्याग एव हि रक्षणम् ।<br>
तटाकोदरसंस्थानां परीवाह इवाम्भसाम् ।।

अपि च

दातव्यं भोक्तव्यं धनविषये सञ्चयो न कर्त्तव्यः।<br>
पश्येह मधुकरीणां सञ्चितमर्थं हरन्त्यन्ये ।।

इत्येवं विचार्य सर्वस्वदक्षिणं यज्ञं कर्त्तुमुपक्रान्तवान्। ततः शिल्पिभिरतीव मनोहरो मण्डपः कारितः। सर्वापि यज्ञसामग्री समहृता। देवमुनिगन्धर्वयक्षसिद्धादयश्च समाहूताः। तस्मिन्नवसरे समुद्राह्वानार्थं कश्चिद्ब्राह्मणः समुद्रतीरे प्रेषितः। सोऽपि समुद्रतीरं गत्वा गन्धपुष्पादिषोडशोपचारं विधायाब्रवीत् "भोः समुद्र! विक्रमार्को राजा यज्ञं करोति। तेन प्रेषितोऽहं त्वामाह्वातुं समागतः।" इति जलमध्ये पुष्पाञ्जलिं दत्त्वा क्षणं स्थितः। कोऽपि तस्य प्रत्युत्तरं न ददौ। तत उज्जयिनीं यावत्प्रत्यागच्छति तावद्देदीप्यमानशरीरः समुद्रो ब्राह्मणरूपी सन् तमागत्यावदत् "भो ब्राह्मण, विक्रमेणास्मानाह्वातुं प्रेषितस्त्वं, तर्हि तेन यास्माकं सम्भावना कृता सा प्राप्तैव। एतदेव सुहृदो लक्षणं यत्समये दानमानादि क्रियते।" उक्तं च–

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥

दूरस्थितानां मैत्री नश्यति समीपस्थानां वर्धते इति न वाच्यम्।

गिरौ कलापी गगने पयोदो लक्षान्तरेऽर्कश्च जले च पद्मम्।
इन्दुर्द्विलक्षे कुमुदस्य बन्धुर्यो यस्य मित्रं न हि तस्य दूरम्॥

तस्मै राज्ञे व्ययार्थं रत्नचतुष्टयं दास्यामि। एतेषां महात्म्यम्-एकं रत्नं यद्वस्तु स्मर्यते तद्ददाति। द्वितीयरत्नेन भोजनादिकममृततुल्यमुत्पद्यते। तृतीयरत्नाच्चतुरङ्गबलं भवति। चतुर्थाद्रत्नाद्दिव्याभरणानि जायन्ते। तदेतानि रत्नानि गृहीत्वा राज्ञो हस्ते प्रयच्छेति।

ततो ब्राह्मणस्तानि रत्नानि गृहीत्वा उज्जयिनीं यावदागतस्तावद्यज्ञसमाप्तिर्जाता। राजावभृथस्नानं कृत्वा सर्वानर्थिजनान् परिपूर्णमनोरथानकरोत्। ब्राह्मणो राजानं दृष्ट्वा रत्नान्यर्पयित्वा प्रत्येकं तेषां गुणकथनमकथयत्। ततो राजावदत्, "भो ब्राह्मण! भवान् यज्ञदक्षिणाकालं व्यतिक्रम्य समागतः। मया सर्वोऽपि ब्राह्मणसमूहो दक्षिणया तोषितः। तर्हि त्वमेतेषां रत्नानां मध्ये यत्तुभ्यं रोचते तद्गृहाणेति। ब्राह्मणेनोक्तम्, 'गृहं गत्वा गृहिणीं, पुत्रं, स्नुषां च पृष्ट्वा सर्वेभ्यो यद्रोचते तद्ग्रहीष्यामीति।' राज्ञोक्तं 'तथा कुरु।' ब्राह्मणोऽपि स्वगृहमागत्य सर्वं वृत्तान्तं तेषामग्रेऽकथयत्। पुत्रेणोक्तं 'यद्रत्नं चतुरङ्गबलं ददाति तद्ग्रहीष्यामः। यतः सुखेन राज्यं कर्त्तुमर्हिष्यामः।' पित्रोक्तं 'बुद्धिमता

**राज्यं न प्रार्थनीयम्।' पुनः पिता वदति 'यस्माद्धनं लभते तद् गृहाण। धनेन सर्वमपि लभ्यते।' भार्ययोक्तं 'यद्रत्नं षड्रसान् सूते तद्गृह्यताम्। सर्वेषां प्राणिनामन्नेनैव प्राणधारणं भवति।' स्नुषयोक्तं 'यद्रत्नं रत्नाभरणादिकं सूते तद् ग्राह्यम्।'**

**एवं चतुर्णां परस्परं विवादो लग्नः। ततो ब्राह्मणो राजसमीपमागत्य चतुर्णां विवादवृत्तान्तमकथयत्। राजापि तच्छ्रुत्वा तस्मै ब्राह्मणाय चत्वार्यपि रत्नानि ददौ। इति कथां कथयित्वा पुत्तलिका राजानमवदत्, 'भो राजन्, त्वय्येवंविध- सहजमौदार्यं विद्यते चेदस्मिन् सिंहासने समुपविश।' तच्छ्रुत्वा राजा तूष्णीमासीत्।**

## शब्दार्थाः टिप्पण्यश्च

| | | |
|---|---|---|
| **पुत्तलिका** | – | पुतली |
| **समुपवेष्टुम्** | – | सम् + उप + विश् धातु + तुमुन् प्रत्यय बैठने के लिए। |
| **तेनैव** | – | तेन + एव, उसी के द्वारा। |
| **अध्यासितव्यम्** | – | अधि + आस् धातु + तव्यत् प्रत्यय, बैठना चाहिए। |
| **यस्त्वर्थिनाम्** | – | (यः तु अर्थिनाम्), जो याचकों की। |
| **ईप्सितम्** | – | ईप्स् धातु + क्त प्रत्यय इच्छित। |
| **शिल्पिन्** | – | कारीगर। |
| **यच्चोक्तम्** | – | यत् + च + उक्तम्, ऐसा कहा गया है। |
| **समाहूताः** | – | सम्यक् आहूताः, आमन्त्रित किये गये। |
| **तटाकोदरसंस्थानाम्** | – | तटाकस्य उदरे संस्थानाम् (अवस्थितानाम्) तालाब की गहराई में स्थित। |
| **परीवाह** | – | परि + वह् धातु + घञ् प्रत्यय, निकास। |
| **मधुकरीणाम्** | – | मधुमक्खियों का। |
| **सर्वस्वदक्षिणम्** | – | सर्वस्वं दक्षिणा यस्मिन् तत्। यज्ञ का नाम। |
| **गुह्यमाख्याति** | – | गुह्यम् (गोपनीयम्) आख्याति। गोपनीय को कहता है। |
| **कलापी** | – | कलापम् अस्ति अस्य, मोर। |
| **लक्षान्तरेऽर्कश्च** | – | लाखों योजन, मील की दूरी पर सूर्य भी। |

| | | |
|---|---|---|
| **पद्मम्** | – | कमल |
| **इन्दुर्द्विलक्षे** | – | इन्दुः द्विलक्षे, चन्द्रमा से 2 लाख योजन दूर (अत्यधिक दूरी से आशय) |
| **चतुरङ्गबलम्** | – | घुड़सवार, रथसवार हाथीसवार, पैदल सैनिक, इनको मिलाकर चार अङ्गों वाली सेना |
| **व्यतिक्रम्य** | – | वि + अति + क्रम् धातु + ल्यप् प्रत्यय बीतने पर |
| **स्नुषाम्** | – | पुत्रवधू को |

## अभ्यासः

**1. संस्कृतभाषया उत्तरत ।**

(क) विक्रमस्यौदार्यम् पाठः कस्मात् ग्रन्थात् सङ्कलितः?

(ख) उपार्जितानां वित्तानां रक्षणं कथं भवति?

(ग) धनविषये कीदृशः व्यवहारः कर्त्तव्यः?

(घ) जलमध्ये पुष्पाञ्जलिं दत्वा क्षणं कः स्थितः?

(ङ) समुद्रः राज्ञे किमर्थं रत्नचतुष्टयं दत्तवान्?

(च) द्वितीयरत्नेन किम् उत्पद्यते?

(छ) प्रीतिलक्षणं कतिविधं भवति?



**2. रिक्तस्थानानि पूरयत ।**

(क) उपार्जितानां वित्तानां .................... हि रक्षणम्।

(ख) दातव्यं भोक्तव्यं धनविषये .................... न कर्त्तव्यः।

(ग) ततः शिल्पिभिरतीव .................... मण्डपः कारितः।

(घ) भो समुद्र! .................... यज्ञं करोति।

(ङ) तस्मै राज्ञे व्ययार्थं .................... दास्यामि।

(च) यद्रत्नं चतुरङ्गबलं .................... तद् ग्रहीष्यामः।

(छ) सर्वेषां प्राणिनामनेनैव .................... भवति।

**3. अधोलिखितानां पदानां वाक्येषु प्रयोगं कुरुत ।**

वित्तानाम्, शिल्पिभिः, गिरौ, एतेषाम्, दातव्यम् रोचते।

**4. प्रकृतिप्रत्ययविभागः क्रियताम् ।**

उपक्रान्तवान्, विधाय, गत्वा, गृहीत्वा, स्थितः, व्यतिक्रम्य, दातव्यम्।

**5. सन्धिविच्छेदं कुरुत ।**

तेनैव, यच्चोक्तम्, तस्येप्सितम्, चैव, यच्च, तदपि, सर्वापि, सोऽपि, प्राप्तैव, चेदस्मिन्, तच्छ्रुत्वा, त्वय्येवम्

**6. सप्रसङ्गं हिन्दीभाषया व्याख्या कार्या ।**

(क) उपार्जितानां वित्तानां त्याग एव हि रक्षणम्।
तटाकोदरसंस्थानां परीवाह इवाम्भसाम्।।

(ख) ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम्।।



**7. अधोलिखितानां समस्तपदानां विग्रहं कुरुत ।**

विक्रमतुल्यम्, क्रियाविधिज्ञम्, सकलगुणनिवासः, यज्ञसामग्री, समुद्रतीरम्, जलमध्ये, पुष्पाञ्जलिम्, देदीप्यमानशरीरः, ययार्थम्, यज्ञसमाप्तिः, गुणकथनम्, ब्राह्मणसमूहः, प्राणधारणम्, राजसमीपम्।

## योग्यताविस्तारः

**अधोलिखितानां सूक्तीनामध्ययनं कृत्वा प्रस्तुतपाठेन भावसाम्यम् अवधत्त।**

**1. मित्रम्–**

**(*i*) मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः**
**पात्रं यत्सुखदुःखयोः सह भवेन्मित्रेण तद्दुर्लभम्।**
**ये चान्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाकुला-**
**स्ते सर्वत्र मिलन्ति तत्त्वनिकषग्रावा तु तेषां विपत्।।**

(*ii*) न मातरि न दारेषु न सोदर्ये न चात्मजे।
विश्वासस्तादृशः पुंसां यादृङ्-मित्रे स्वभावजे।। *कवितामृतकूप-88*

(*iii*) न तन्मित्रं यस्य कोपाद्बिभेति यद्वामित्रं शङ्कितेनोपचर्यम्।
यस्मिन्मित्रे पितरीवाश्वसीत तद्वै मित्रं सङ्गतानीतराणि।। *नीतिकल्पतरु-9.141*

(*iv*) केनामृतमिदं सृष्टं मित्रमित्यक्षरद्वयम्।
आपदां च परित्राणं शोकसन्तापभेषजम्।। *पञ्चतन्त्रम्-2.60*

2. औदार्यम्-

अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानां हि वसुधैव कुटुम्बकम्।। *पञ्चतन्त्रम्-5.305*

3. दानम्-

(*i*) धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत्।
सन्निमत्ते वरं त्यागो विनाशे नियते सति।।

(*ii*) परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति नद्यः।
परोपकाराय दुहन्ति गावः, परोपकारार्थमिदं शरीरम्।। *विक्रमोर्वशीयम्-66*

(*iii*) अष्टादशपुराणेषु व्यासस्य वचनद्वयम्।
परोपकारः पुण्याय पापाय परपीडनम्।।

(*iv*) श्रोत्रं श्रुतेनैव न कुण्डलेन, दानेन पाणिर्नतु कङ्कणेन।
विभाति कायः करुणापराणां परोपकारेण न चन्दनेन।। *नीतिशतकम्-1.72*

(*v*) पद्माकरं दिनकरो विकचीकरोति
चन्द्रो विकासयति कैरवचक्रवालम्।
नाभ्यर्थितो जलधरोऽपि जलं ददाति
सन्तः स्वयं परहितेषु कृताभियोगाः।।

*नीतिशतकम्-1.74*




## अष्टमः पाठः

# भू-विभागाः

प्रस्तुत पाठ मुगलसम्राट् शाहजहाँ के विद्वान पुत्र दाराशिकोह द्वारा विरचित ग्रन्थ 'समुद्रसङ्गमः' से संकलित किया गया है। दाराशिकोह संस्कृत तथा अरबी भाषा के तत्कालीन विद्वानों में अग्रगण्य थे। 'समुद्रसङ्गमः' ग्रन्थ में 'पृथिवी निरूपण' के अन्तर्गत उन्होंने पर्वतों, द्वीपों, समुद्रों आदि का विशिष्ट शैली में वर्णन किया है। उसी वर्णन के अंश यहाँ "भू-विभागाः" शीर्षक के अन्तर्गत प्रस्तुत किये गये हैं।

दाराशिकोह मुगलसम्राट् शाहजहाँ के सबसे बड़े पुत्र थे। उनका जीवनकाल 1615 ई॰ से 1659 ई॰ तक है। शाहजहाँ उनको राजपद देना चाहते थे पर उत्तराधिकार के संघर्ष में उनके भाई औरंगजेब ने निर्ममता से उनकी हत्या कर दी। दाराशिकोह ने अपने समय के श्रेष्ठ संस्कृत पण्डितों, ज्ञानियों और सूफी सन्तों की सत्संगति में वेदान्त और इस्लाम के दर्शन का गहन अध्ययन किया और उन्होंने फारसी और संस्कृत में इन दोनों दर्शनों की समान विचारधारा को लेकर विपुल साहित्य लिखा। फारसी में उनके ग्रन्थ हैं-सारीनतुल् औलिया, सकीनतुल् औलिया, हसनातुल् आरफीन (सूफी सन्तों की जीवनियाँ), तरीकतुल् हकीकत, रिसाल – ए-हकनुमा, आलमे नासूत, आलमे मलकूत (सूफी दर्शन के प्रतिपादक ग्रन्थ), सिर्र-ए-अकबर (उपनिषदों का अनुवाद) उनके फारसी ग्रन्थ हैं। श्रीमद्भगवद्गीता और योगवासिष्ठ के भी फारसी भाषा में उन्होंने अनुवाद किये। 'मज्म-उल्-बहरैन्' फारसी में उनकी अमर कृति है, जिसमें उन्होंने इस्लाम और वेदान्त की अवधारणाओं में मूलभूत समानताएँ बतलायी हैं। इसी ग्रन्थ को दाराशिकोह ने 'समुद्रसङ्गमः' नाम से संस्कृत में लिखा।

**अथ पृथिवीनिरूपणम्-पृथिव्याः सप्तभेदाः। ते च भेदाः सप्तपुटान्युच्यन्ते। तानि च पुटानि-अतल-वितल-सुतल-तलातल-रसातल-पातालाख्यानि। अस्मन्मतेऽपि सप्तभेदाः। यथाऽस्मद्वेदे श्रूयते परमेश्वरो यथा सप्तगगनानि तद्वत् पृथिव्याः सप्तविभागान् कृतवान्।**

**अथ पृथिव्याः विभागनिरूपणं यत्र लोकास्तिष्ठन्ति। तस्याः दार्शनिकैः सप्तधा विभागः कृतस्तान् विभागान् सप्त अअक्लिम इति वदन्ति। पौराणिकास्तु सप्त द्वीपानि**

**वदन्ति। एतान् खण्डान् पलाण्डुत्वग्वदुपर्यधो भावेन न ज्ञायन्ते, 'किन्तु' निःश्रेणी सोपानवज्जानन्ति। सप्त पर्वतान् सप्त कुलाचलान् वदन्ति, तेषां पर्वतानां नामान्येतानि प्रथमः सुमेरुर्मध्ये, द्वितीयो हिमवान्, तृतीयो हेमकूटः, चतुर्थो निषधः एते सुमेरोरुत्तरतः। माल्यवान् पूर्वस्यां, गन्धमादनः पश्चिमायां कैलासश्च मर्यादापर्वतेभ्योऽतिरिक्तः। यथाऽस्मद्वेदे श्रूयते- "अस्माभिः पर्वताः शंकवः कृताः। एतेषां सप्तद्वीपानां प्रत्येकमावेष्टनरूपाः सप्तसमुद्राः। लवणो जम्बुद्वीपस्यावरकः। इक्षुरसः प्लक्षद्वीपस्य, दधिसमुद्रः क्रौञ्चद्वीपस्य, क्षीरसमुद्रः शाकद्वीपस्य, स्वादुजलसमुद्रः पुष्करद्वीपस्यावरकः इति। सप्त समुद्राः अस्मद्वेदेऽपि प्रकटाः भवन्ति। वृक्षाः लेखनी भवेयुः समुद्रोऽपि मसी भवेत्, परं भगवद्वाक्यानि समाप्तानि न भवन्ति। प्रतिद्वीपं प्रतिपर्वतं प्रतिसमुद्रं नानाजातयोऽनन्ता जन्तवस्तिष्ठन्ति। या पृथिवी ये पर्वताः ये समुद्रा सर्वाभ्यः पृथिवीभ्यः सर्वेभ्यः पर्वतेभ्यः सर्वेभ्यः समुद्रेभ्यः उपरि तिष्ठन्ति तान् 'स्वर्ग' इति वदन्ति। या पृथिवी ये पर्वताः ये समुद्राः सर्वाभ्यः पृथिवीभ्यः सर्वेभ्यः पर्वतेभ्यः सर्वेभ्यः समुद्रेभ्योऽधो भागे तिष्ठन्ति स 'नरक' इति वदन्ति। निश्चितं किल सिद्धैः स्वर्गनरकादिकं सर्वं ब्रह्माण्डान्न किञ्चिद्बहिरस्तीति। ते सप्तगगनाश्रिताः सप्त ग्रहाः स्वर्गं परितो मेखलावत् परिभ्रमन्तीति वदन्ति; न स्वर्गस्योपरि। अथ स्वर्गस्य यदि मन आकाशं जानन्ति अस्मदीयास्तमर्श इति वदन्ति। स्वर्गभूमिं कुर्शीति वदन्ति।"**



## शब्दार्थाः टिप्पणयश्च

| | | |
|---|---|---|
| **पुटानि** | – | भेदाः, भेद या पुट |
| **अअक्लिम** | – | अकूलीन (खण्ड अथवा टुकड़ा) |
| **पलाण्डुत्वक्** | – | प्याज का छिलका |
| **कुलाचलाः** | – | कुलपर्वत अथवा सात पर्वतों की माला |
| **निःश्रेणी** | – | निसेनी अथवा सीढ़ी |
| **सोपान** | – | निसेनी में एक समान दूरी पर लगने वाले छोटे-छोटे काष्ठ-खण्ड |
| **शङ्कवः** | – | कीलें |

| | | |
|---|---|---|
| **आवेष्टनरूपा** | – | आवरण करने वाले |
| **इक्षुरसः** | – | गन्ने का रस, सुरा अथव मदिरा |
| **आवरकः** | – | ढकने वाला |
| **मसी** | – | स्याही |
| **मेखलावत्** | – | मेखला अथवा शृङ्खला के समान |
| **'अर्श'** | – | आकाश अथवा गगन, स्वर्ग के ऊपर की छत (फारसी शब्द) |
| **'कुर्शी'** | – | परमेश्वर का सिंहासन अथवा स्वर्गभूमि, 'कुर्शी' को आठवाँ आसमान भी कहा गया है। (फारसी शब्द) |

## अभ्यासः



1. **संस्कृतेन उत्तरं दीयताम् ।**

(क) पृथिव्याः कति भेदाः?

(ख) पृथिव्याः सप्तपुटानां नामानि कानि सन्ति?

(ग) पर्वताः कति सन्ति?

(घ) समुद्राः कति सन्ति?

(ङ) दधिसमुद्रः कस्य द्वीपस्यावरकः?

(च) 'अर्श' इति पदं कस्मै प्रयुक्तम्?

(छ) 'कुर्शी' इति पदं कस्मिन्नर्थे प्रयुक्तम्?

(ज) 'अस्मद्वेद' इति शब्दः दाराशिकोहेन कस्य ग्रन्थस्य कृते प्रयुक्तः?

2. **हिन्दीभाषया आशयं लिखत ।**

एतान् खण्डान् पलाण्डुत्वग्वदुपर्यधोभावेन न ज्ञायन्ते, किन्तु निःश्रेणी–सोपानवज्जानन्ति। सप्तपर्वतान् सप्तकुलाचलान् वदन्ति, तेषां पर्वतानां नामान्येतानि–प्रथमः सुमेरुर्मध्ये, द्वितीयो हिमवान्, तृतीयो हेमकूटः, चतुर्थो निषधः एते सुमेरोरुत्तरतः।

3. **अधोलिखितानां पदानां स्वसंस्कृतवाक्येषु प्रयोगं कुरुत ।**

पुटानि, कृतवान्, आवेष्टनरूपा, सर्वेभ्यः, ब्रह्माण्डात्, परिभ्रमन्ति।

**4. अधोलिखितानां पदानां सन्धिविच्छेदं कुरुत ।**

**पुटान्युच्यन्ते, अस्मन्मते, पलाण्डुत्वग्वदुपर्यधोभावेन, सोपानवज्जानन्ति, सुमेरोरुत्तरतः, समुद्रोऽपि, किञ्चिद्बहिरस्तीति, अस्मदीयास्तमर्श**

**5. अधोलिखितानां पदानां पर्यायवाचिपदानि लिखत ।**

पृथिवी, पर्वतः, समुद्रः, गगनम्, स्वर्गः

**6. रिक्तस्थानानाम् पूर्तिः विधेया ।**

(क) पौराणिकास्तु ................ द्वीपानि वदन्ति

(ख) सप्त ................ सप्तकुलाचलान् वदन्ति

(ग) ................ जम्बुद्वीपस्यावरकः

(घ) स्वर्गभूमिं ................ वदन्ति

## योग्यताविस्तारः



**(क) संस्कृतवाङ्मये भूगोल-खगोलविषयकं ज्ञानं प्राचुर्येण उपलभ्यते ।**

**यथा-सूर्यसिद्धान्तादिशास्त्रेषु-**

**भगवन्! किम्प्रमाणा भूः किमाकारा किमाश्रया।**
**किंविभागा कथं चात्र सप्तपातालभूमयः॥**

**अहोरात्रव्यवस्थां च विदधाति कथं रविः।**
**कथं पर्येति वसुधां भुवनानि विभावयन्॥**

**कथं पर्येति वसुधां भुवनानि विभावयन्।**
**भूमेरुपर्युपर्यूर्ध्वाः किमुत्सेधाः किमन्तराः॥**

**(ख) 'कुलाचलाः' सप्तपर्वतानां माला अस्ति। संस्कृतवाङ्मये एते सप्त पर्वताः ।**

**महेन्द्रो मलयः सह्यः शुक्तिमान् ऋक्षपर्वतः।**
**विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः॥**

**(ग) अस्मिन् पाठे वर्णितानां भौगोलिकतथ्यानां तुलना आधुनिकभूगोल-विज्ञानेन प्रमाणिततथ्यैः सह करणीया ।**

**(घ) सप्तधा इति पदं अनुसृत्य अधोलिखितैः संख्यावाचिभिः शब्दैः पदानि निर्मातव्यानि एकम्, द्वि, त्रि, चतुर्, पञ्च, ........**




## नवमः पाठः

# कार्यं वा साधयेयम्, देहं वा पातयेयम्

प्रस्तुत पाठ अम्बिकादत्तव्यास द्वारा रचित 'शिवराजविजय' नामक ऐतिहासिक उपन्यास के प्रथम विराम के चतुर्थ निःश्वास से संकलित है। इसके रचयिता अम्बिकादत्तव्यास बहुमुखी प्रतिभा के धनी थे। इन्होंने संस्कृत व हिन्दी में शताधिक ग्रन्थों की रचना की। इनकी कृतियों में अभिव्यक्त अद्भुत कल्पनाशक्ति एवं पात्रों के चरित्र में प्रदर्शित उच्च आदर्शों ने विद्वज्जनों को अपनी ओर आकृष्ट किया।

प्रस्तुत पाठ में यह दर्शाया गया है कि जो वीर, विश्वासपात्र, कर्मठ व दृढसंकल्प वाले होते हैं, उन्हें मानवीय एवं प्राकृतिक किसी भी प्रकार की बाधाएँ अपने संकल्पित लक्ष्य को प्राप्त करने से नहीं रोक सकतीं, संकल्पित कार्य को पूरा करने में चाहे उनके प्राण भी क्यों न चले जाएँ।

शिवाजी का विश्वासपात्र एवं कर्मठ दूत (गुप्तचर) अपने निर्दिष्ट कार्यों को पूरा करने के लिए सिंहदुर्ग से पत्र लेकर तोरणदुर्ग जाता है। रास्ते में अनेक प्रकार की भीषण प्राकृतिक बाधाओं के बाद भी वह तनिक भी विचलित नहीं होता है तथा अपने संकल्पित लक्ष्य की ओर बढ़ता ही जाता है। वह कहता है–'**कार्यं वा साधयेयम्, देहं वा पातयेयम्**'–अर्थात्–'कार्य सिद्ध करूँगा या देह त्याग कर दूँगा'। यही भाव प्रस्तुत गद्यांश में वर्णित है।



**मासोऽयमाषाढः, अस्ति च सायं समयः, अस्तं जिगमिषुर्भगवान् भास्करः सिन्दूर-द्रव-स्नातानामिव वरुण-दिगवलम्बिनामरुण-वारिवाहानामभ्यन्तरं प्रविष्टः। कलविङ्काश्चाटकैर- रुतैः परिपूर्णेषु नीडेषु प्रतिनिवर्तन्ते। वनानि प्रतिक्षणमधिकाधिकां श्यामतां कलयन्ति। अथाकस्मात् परितो मेघमाला पर्वतश्रेणीव प्रादुरभूत्, क्षणं सूक्ष्मविस्तारा, परतः प्रकटित-शिखरि शिखर-विडम्बना, अथ दर्शित-दीर्घ-शुण्डमण्डित-दिगन्त-दन्तावल-भयानकाकारा ततः पारस्परिक-संश्लेष-विहित-महान्धकारा च समस्तं गगनतलं पर्यच्छदीत्।**

**अस्मिन् समये एकः षोडशवर्ष-देशीयो गौरो युवा हयेन पर्वतश्रेणीरुपर्युपरि गच्छति स्म। एष सुघटितदृढशरीरः श्याम-श्यामैर्गुच्छ-गुच्छैः कुञ्चित-कुञ्चितैः कच-कलापैः**

कमनीय-कपोलपालिः दूरागमनायासवशेन सूक्ष्म-मौक्तिक-पटलेनेव स्वेदबिन्दु-व्रजेन समाच्छादित-ललाट-कपोल-नासाग्रोत्तरोष्ठः प्रसन्न-वदनाम्भोज- प्रदर्शित-दृढसिद्धान्त-महोत्साहः, राजतसूत्र-शिल्पकृत-बहुल-चाकचक्य-वक्र- हरितोष्णीष-शोभितः, हरितेनैव च कञ्चुकेन-व्यूढगूढचरता-कार्यः, कोऽपि शिववीरस्य विश्वासपात्रं सिंहदुर्गात् तस्यैव पत्रमादाय तोरणदुर्गं प्रयाति।



तावदकस्मादुत्थितो महान् झञ्झावातः, एकः सायंसमयप्रयुक्तः स्वभाव-वृत्तोऽन्धकारः, स च द्विगुणितो मेघमालाभिः। झञ्झावातोद्धूतैः रेणुभिः शीर्णपत्रैः कुसुमपरागैः शुष्कपुष्पैश्च पुनरेष द्वैगुण्यं प्राप्तः। इह पर्वत-श्रेणीतः पर्वतश्रेणीः, वनाद् वनानि, शिखराच्छिखराणि प्रपातात् प्रपातान्, अधित्यकातोऽधित्यकाः, उपत्यकात उपत्यकाः, न कोऽपि सरलो मार्गः, नानुद्भेदिनी भूमिः, पन्थाः अपि च नावलोक्यते। क्षणे-क्षणे हयस्य खुराश्चिक्कण-पाषाण-खण्डेषु प्रस्खलन्ति। पदे पदे दोधूयमानाः

**वृक्षशाखाः सम्मुखमाघ्नन्ति, परं दृढसङ्कल्पोऽयं सादी (अश्वारोही) न स्वकार्याद् विरमति। परितः स-हडहडाशब्दं दोधूयमानानां परस्सहस्त्र-वृक्षाणां, वाताघात-सञ्जात-पाषाण-पातानां प्रपातानाम्, महान्धतमसेन ग्रस्यमानानामिव सत्त्वानां क्रन्दनस्य च भयानकेन स्वनेन कवलीकृतमिव गगनतलम्। परं "देहं वा पातयेयं कार्यं वा साधयेयम्" इति कृतप्रतिज्ञोऽसौ शिववीरचरो निजकार्यान्न विरमति।**

## शब्दार्थाः टिप्पण्यश्च

| | | |
|---|---|---|
| **जिगमिषुः** | – | जाने के इच्छुक; गम् + सन् + उ; इच्छार्थक 'सन्' प्रत्यय। |
| **सिन्दूरद्रवस्नातानाम्** | – | सिन्दूर के घोल से स्नान किये हुए। |
| **स्नातानाम्** | – | ष्णा (शौचे) + क्त प्रत्यय। षष्ठी विभक्ति बहुवचन। |
| **वरुणदिक्** | – | पश्चिमदिशा; वरुणस्य दिक्; वरुणदेव को पश्चिम दिशा का अधिपति माना जाता है। |
| **वरुणदिगवलम्बिनाम्** | – | वरुणदिशः अवलम्बनं शीलं येषां ते। तेषाम्। अव + लम्ब् + इन् प्रत्यय। |
| **अरुणवारिवाहानाम्** | – | लालिमायुक्त बादलों के; अरुणाश्च ते वारिवाहाश्च। तेषाम्। वारि वहन्ति इति वारिवाहाः = मेघाः |
| **कलविङ्काः** | – | पक्षी (गौरैया) |
| **चाटकैरः** | – | पक्षिशावकों के द्वारा। चटकस्य अपत्यं चाटकैरः। चटका + एरच् प्रत्यय। गौरैया का बच्चा |
| **प्रतिक्षणम्** | – | पल-पल। क्षणं क्षणम् = प्रतिक्षणम्। अव्यय। |
| **नीडेषु** | – | घोंसलों में। नपुंसकलिङ्ग, सप्तमी बहुवचन। |
| **श्यामताम्** | – | कालेपन को। श्यामस्य भावः = श्यामता। भावार्थ में 'तल्' प्रत्यय। श्याम + तल् |
| **कलयन्ति** | – | प्राप्त करते हैं। कल (गतौ सङ्ख्याने च) + णिच्, लट् लकार प्रथम पुरुष, बहुवचन। चुरादिगण |
| **अथ** | – | अनन्तरम्। अव्यय। |

**दर्शितदीर्घशुण्डमण्डित दिगन्तदन्तावलभयानकाकारा** – लम्बी-लम्बी सूँडों से सुशोभित दिग्गजों के समान भयानक आकार वाली (मेघमाला)

दीर्घश्चासौ शुण्डश्च = दीर्घशुण्डः। दर्शितश्चासौ दीर्घशुण्डश्च। दर्शितदीर्घशुण्डः। दर्शितदीर्घशुण्डेन मण्डितः। दिशाम् अन्ताः दिगन्ताः। शोभनौ दन्तौ अस्य इति दन्तावलः। दिगन्ता एव दन्तावलाः दिगन्तदन्तावलाः। दीर्घशुण्डमण्डिताश्च ते दिगन्तदन्तावलाश्च। दर्शितदीर्घशुण्डमण्डितदिगन्तदन्तावलाः। भयनाकश्च असौ आकारश्च भयानकाकारः। दर्शितदीर्घशुण्डमण्डितदिगन्त-दन्तावला इव भयानकाकारः यस्या सा (मेघमाला)

**प्रकटितशिखरिशिखरविडम्बना** – पर्वत शिखरों का अनुकरण करने वाली (मेघमाला) शिखरिणां शिखराणि शिखरिशिखराणि। शिखरिशिखराणां विडम्बनं = शिखरिशिखरविडम्बनम्। प्रकटितं-शिखरिशिखरविडम्बनं यया सा (मेघमाला)

**मेघमाला समस्तं गगनतलं परितः पर्यच्छदीत्** – मेघमाला ने समस्त गगन मण्डल को आच्छादित कर लिया। 'परितः' अव्यय के प्रयोग से 'गगनतलं' और 'समस्तं' पदों में द्वितीया विभक्ति हुई है – 'अभितः परितःसमयानिकषाहाप्रतियोगेऽपि' इस अनुशासन से।

**परितः** – चारों ओर

**प्रादुरभूत्** – प्रकट हुई। प्रादुस् + भू + लुङ् लकार, प्रथम पुरुष एकवचन

**पारस्परिकसंश्लेषेण** – (बादलों के)परस्पर मिल जाने से

**पर्यच्छदीत्** – ढक लिया है। (व्याप्त हो गई)। परि + अच्छदीत्। छद (संवरणे) लुङ् लकार, प्रथम पुरुष एकवचन

**षोडशवर्षदेशीयः** – लगभग सोलह वर्ष का। 'लगभग' इस अर्थ में 'कल्प' 'देश्य' या 'देशीयर्' प्रत्यय लगते हैं। यहाँ 'देशीयर्' प्रत्यय लगा है। षोडशवर्ष + देशीयर्

**कुञ्चितकुञ्चितैः** – घुँघराले। कुञ्च् (गति-कौटिल्यालपीभावेषु) + क्त प्रत्यय।

**कचकलापैः** – केश समूहों के द्वारा। कचानां कलापाः तैः

| | | |
|---|---|---|
| **कमनीयकपोलपालिः** | – | सुन्दर गालों वाला। कमनीये कपोलपाली यस्य सः कम् (कान्तौ) + अनीयर् प्रत्यय। |
| **हयेन** | – | घोड़े से |
| **स्वेदबिन्दुव्रजेन** | – | पसीने की बूँदों से। स्वेदबिन्दूनां व्रजः तेन |
| **समाच्छादितललाट–कपोलनासाग्रोत्तरोष्ठः** | – | जिसका ललाट, कपोल, नासिका का अग्रभाग तथा ऊपरी ओंठ (पसीने की बूँदों से) व्याप्त है। ललाटश्च कपोलश्च नासाग्रश्च उत्तरोष्ठश्च = ललाटकपोल–नासाग्रोत्तरोष्ठम् (समास में एकवचन होना विशेष है) समाच्छादितं ललाटकपोलनासाग्रोत्तरोष्ठं यस्य सः बहुव्रीहि समास। |
| **प्रसन्नवदनाम्भोजेन** | – | प्रसन्नमुखकमल से |
| **प्रसन्नवदनाम्भोजप्रदर्शित–दृढसिद्धान्तमहोत्साहः** | – | प्रसन्न मुख कमल से दृढ सिद्धान्त के महोत्साह को प्रकट करने वाला |
| **राजतसूत्रशिल्पकृतबहुल–चाकचक्यवक्रहरितोष्णीषशोभितः** | – | चाँदी के तार की कढाई (शिल्प) के कारण अत्यधिक चमकने वाली तथा टेढ़ी बँधी हुई हरी पगड़ी से सुशोभित। राजतसूत्रस्य शिल्पेन कृतं बहुलं चाकचक्यं यस्य तथाभूतं वक्रं हरितं च यत् उष्णीषं, तेन शोभितः बहुव्रीहि समास। |
| **आदाय** | – | लेकर। आ + दा + ल्यप् प्रत्यय |
| **प्रयाति** | – | जाता है। प्र + या (प्रापणे) + लट् लकार, प्रथम पुरुष एकवचन |
| **झञ्झावातोद्धूतैः** | – | आँधी से उठी। झञ्झावातेन उद्धूतैः। उत् + धू (कम्पने) क्त प्रत्यय |
| **रेणुभिः** | – | धूलों से |
| **द्वैगुण्यम्** | – | दुगुना हो गया। द्विगुणस्य भावः। द्विगुण + ष्यञ् |
| **अनुद्भेदिनी** | – | समतल। न + उद्भेदिनी। न + उद् + भिद् + इन् + ङीप् प्रत्यय |
| **प्रपातात् प्रपाता** | – | झरने के बाद झरने |

| | | |
|---|---|---|
| **अधित्यकातोऽधित्यकाः** | – | अधित्यका (पर्वत के ऊपर की ऊँची भूमि) के बाद अधित्यकाएँ |
| **उपत्यकात उपत्यकाः** | – | पर्वत के पास की नीची भूमि। उपत्यका के बाद उपत्यकाएँ |
| **दोधूयमानाः** | – | अत्यधिक हिलने वाले। पुनः पुनः अत्यधिकं कम्पमानाः। धूञ् + यङ् + शानच् प्रत्यय |
| **आघातः** | – | अभिघात। चोट। आ + हन् + क्त प्रत्यय |
| **महान्धतमसेन** | – | अत्यन्त अन्धकार से। अकारान्त नपुंसक शब्द है। अन्धयति इति अन्धम्। अन्धं च तत् तमश्च। अन्धतमसम्। महच्च तत् अन्धतमसं च महान्धतमसम्। तेन |
| **कवलीकृतम्** | – | ग्रसित होता हुआ। अकवलं कवलं सम्पद्यमानं कृतं कवलीकृतम्। कवल + च्वि + कृतम् प्रत्यय |
| **आघ्नन्ति** | – | आ + हन्। लट् लकार, प्रथम पुरुष, बहुवचन |
| **सादी** | – | घुड़सवार |
| **चिक्कणपाषाणखण्डेषु** | – | चिकने पत्थर खण्डों पर |
| **साधयेयम्** | – | सिद्ध करूँगा। साध् (संसिद्धौ) + णिच् प्रत्यय + लिङ् लकार। उत्तम पुरुष एकवचन |
| **पातयेयम्** | – | नष्ट कर दूँगा। पत् (गतौ) + णिच् प्रत्यय। लिङ् लकार उत्तम पुरुष एकवचन |



## अभ्यासः

**1. संस्कृतेन उत्तरं दीयताम् ।**

(क) सायं समये भगवान् भास्करः कुत्र जिगमिषुः भवति?

(ख) अस्ताचलगमनकाले भास्करस्य वर्णः कीदृशः भवति?

(ग) नीडेषु के प्रतिनिवर्तन्ते?

(घ) शिववीरस्य विश्वासपात्रं किं स्थानं प्रयाति स्म?

(ङ) प्रतिक्षणमधिकाधिकां श्यामतां कानि कलयन्ति?

(च) शिववीरविश्वासपात्रस्य उष्णीषं कीदृशमासीत्?

(छ) मेघमाला कथं शोभते?

**2. समीचीनोत्तरसङ्ख्यां कोष्ठके लिखत ।**

अ. शिवराजविजयस्य रचयिता कः अस्ति? ( )

(क) बाणभ‍ट्टः

(ख) श्रीहर्षः

(ग) अम्बिकादत्तव्यासः

(घ) माघः

आ. कतिवर्षदेशीयो युवा हयेन पर्वतश्रेणीरुपर्युपरि गच्छति स्म । ( )

(क) चतुर्दशवर्षदेशीयः

(ख) द्वादशवर्षदेशीयः

(ग) पञ्चदशवर्षदेशीयः

(घ) षोडशवर्षदेशीयः

इ. शिववीरस्य विश्वासपात्रं किम् आदाय तोरणदुर्गं प्रयाति ?( )

(क) संवादम् आदाय

(ख) पत्रम् आदाय

(ग) पुष्पगुच्छम् आदाय

(घ) अश्वम् आदाय



**3. रिक्तस्थानानि पूरयत ।**

(क) अथाकस्मात् परितो मेघमाला ................ प्रादुरभूत्।

(ख) क्षणे क्षणे ................ खुराश्चिक्कणपाषाणखण्डेषु प्रस्खलन्ति।

(ग) पदे पदे ................ वृक्षशाखाः सम्मुखमाघ्नन्ति।

(घ) कृतप्रतिज्ञोऽसौ ................ निजकार्यान्न विरमति।

**4. अधोलिखितानां पदानाम् अर्थान् विलिख्य वाक्येषु प्रयुञ्जत ।**

भास्करः, मेघमाला, वनानि, मार्गः, वीरः, गगनतलम्, झञ्झावातः, मासः, सायम्।

**5. अधोलिखितानां पदानां सन्धिविच्छेदं कृत्वा सन्धिनिर्देशं कुरुत ।**

तस्यैव, शिखराच्छिखराणि, कोऽपि, प्रादुरभूत्, अथाकस्मात्, कार्यान्न।

**6. अधोलिखितानां पदानां प्रकृतिप्रत्ययविभागं प्रदर्शयत ।**

प्रयुक्तः, उत्थितः, उत्प्लुत्य, रुतैः, उपत्यकातः, उत्थितः, ग्रस्यमानः।

**7. अलङ्कारनिर्देशं कुरुत ।**

(1) वदनाम्भोजेन (2) दिगन्तदन्तावलः (3) सिन्दूरद्रवस्नातानामिव वरुणदिगवलम्बिनाम्

**8. विग्रहवाक्यं विलिख्य समासनामानि निर्दिशत ।**

मेघमाला, महान्धकारः, पर्वतश्रेणीः, महोत्साहः, विश्वासपात्रम्, हरितोष्णीषशोभितः।

**9. पाठ्यांशस्य सारं हिन्दीभाषया आङ्ग्लभाषया वा लिखत ।**

**10. पाठ्यांशे प्रयुक्तानि अव्ययानि चित्वा लिखत ।**

## योग्यताविस्तारः



शिवाजी इत्यस्य कथामाधारीकृत्य संस्कृते, अन्यासु भारतीय-भाषासु च लिखितानां कथानकानां ग्रन्थानां वा सूचना सङ्गृहीतव्या। तद्यथा संस्कृते 'श्रीशिवराज्योदयं' नाम महाकाव्यम् अस्ति।

द्वादशमासानां नामानि ज्ञेयानि, अस्मिन् पाठे कस्य मासस्य वर्णनं कृतम्, तेन कथाप्रसङ्गे कः विशेषः समुत्पन्न इति निरूपणीयम्।

अस्मिन् पाठे निसर्गस्य (प्रकृतेः) कीदृशं स्वरूपं चित्रितम्, तस्माच्च घटनाचक्रं कथं परिवर्तते इति प्रतिपादनीयम्।





12078CH10

## दशमः पाठः

# दीनबन्धुः श्रीनायारः

प्रस्तुत पाठ उड़िया भाषा के प्रख्यात साहित्यकार श्री चन्द्रशेखरदासवर्मा द्वारा विरचित 'पाषाणीकन्या' कथासंग्रह के संस्कृत अनुवाद से संकलित है।

इसके अनुवादक डॉ॰ नारायण दाश हैं। इस कथा के नायक श्रीनायार का पालन-पोषण एक अनाथाश्रम में हुआ है। श्रीनायार ने अपनी कर्मदक्षता, दाक्षिण्य और सेवामनोवृत्ति से समाज में आदर्श स्थापित किया है। वह प्रतिमास अपने वेतन का आधा से अधिक भाग केरल में स्थापित अनाथाश्रम को भेजते हैं। प्रस्तुत कथा में श्रीनायार का लोककल्याणकारी आदर्श चरित्र वर्णित है।



**श्रीनायारः केन्द्रसर्वकारतः स्थानान्तरणेन आगत्य ओडिशासर्वकारस्य अधीने प्रायः वर्षत्रयेभ्यः कार्यं करोति। तथाप्यस्मिन् वर्षत्रयात्मके कालखण्डे एकवारमपि स्वराज्यं केरलं प्रति गमनाय इच्छां न प्रकटितवान् । स स्वल्पभाषी, अतस्तस्य मनःकथा मनोव्यथा वा बोधगम्या नास्ति। सन्तुलितो वार्त्तालापः, साक्षात्समये आगमनम्, ततः सञ्चिकासु मनोनिवेशः, कार्यं समाप्य स्वगृहं प्रत्यागमनञ्च तस्य वैशिष्ट्यमासीत्। तस्य कर्मनैपुण्यं दृष्ट्वा एव ओडिशासर्वकारस्तं स्थानान्तरणेन स्वीकृत्य खाद्यापूर्तिविभागे सचिवपदे नियुक्तवान् । गतस्य वर्षत्रयस्य आकलनात् ज्ञायते यद् विभागस्य कार्यनैपुण्यं दशगुणैः वर्धितम्। खाद्ये अपमिश्रणं न्यूनीभूतम्। अत उपभोक्तृणामपि अभियोगो नास्ति विभागस्य विपक्षे। मन्त्रिणां मध्येऽपि तस्य सुख्यातिः वर्तते।**

**श्रीनायारस्य दायित्वग्रहणस्य एकमासाभ्यन्तरे बहुदिनेभ्यः स्थगितानां विविध समस्यानामपि समाधानं जातम्। स्वकार्यं त्यक्त्वा अपरस्य सहकारस्तस्य परमधर्मः। सः प्रतिमासं प्रथमदिवसे स्ववेतनस्य अर्धाधिकं भागं केरलं प्रेषयति स्म कश्चित् सम्पर्कः। तेनानुमीयते तस्य राज्येन सह अस्ति कश्चित् सम्पर्कः। कानिचन मलयालमभाषायाः संवादपत्राणि अतिरिच्य कदापि तस्य नाम्ना किमपि पत्रमागतमिति कोऽपि कदापि न जानाति।**



एकस्मिन् दिने श्रीनायारः पत्रमेकं धृत्वा मस्तकमवनमय्य पठन् आसीत्। नेत्रतीराद् विगलिता अश्रुधारा आर्द्रीकरोति स्म पत्रस्य अर्धाधिकं भागम् । तदानीमेव तस्य कार्यालयलिपिकः श्रीदासःप्रविशति। श्रीनायारः तमुक्तवान्–अधुना मम गमनसमयः समुपागत एव। मम दायित्वहस्तान्तरणपत्रकं सज्जीकुरु। अहमधुना द्वित्राणां दिवसानां सकारणावकाशं स्वीकरिष्यामि। पुनः तदनु स्वीकरिष्यामि दीर्घावकाशम् । यदि कस्मैचिद् अज्ञातेन मया रूक्षो व्यवहारः प्रदर्शितः स्यात्, तदर्थं ते मह्यमुदारचित्तेन क्षमां प्रदास्यन्ति इति सर्वेभ्यो निवेदयतु। अनन्तरं सर्वे अश्रुलहृदयैः सौप्रस्थानिकीं ज्ञापितवन्तः।

तस्य गमनस्य दिवसत्रयात्परं कार्यालये पत्रमेकमागतम्। कौतूहलवशात् श्रीदासः तत्पत्रमुद्घाटितवान् । लेखिका आसीत् सुश्री मेरी यस्याः पार्श्वे सः प्रतिमासमर्धाधिकं धनं धनादेशेन प्रेषयति स्म। पत्रे एवं लिखितमासीत्.....

**श्रीनायार!**

**भगवान् यीशुस्तव मंङ्गलं वितनोतु । मम पूर्वतनं पत्रं त्वया प्राप्तं स्यात्। तव समीपे इदं मम शेषपत्रम्। यतो हि मम जीवनप्रदीपो निर्वापितो भवितुमिच्छति। प्रायस्तवागमनसमये अहं न स्थास्यामि। पूर्वपत्रे-अहमाश्रमस्य सर्वविधमायव्ययाकलनं प्रेषितवती। केवलं यीशोः समीपे गमनात्पूर्वं तव दर्शनमिच्छामि। प्रथमं त्वया निर्मितोऽनाथाश्रमोऽधुना महाद्रुमेण परिणतः। अधुनात्र शताधिका अनाथशिशवो लालिताः पालिताश्च भवन्ति । तव हस्तयोस्तव अनाथाश्रमं समर्प्य अहं सौप्रस्थानिकीमिच्छामि। अद्य समाजस्त्वत्तो बहु किमपि इच्छति। यौ कौ वां तव पितरौ भवतां नाम, तौ धन्यवादार्हौ। कदाचित्ताभ्यां त्वं विस्मृतः स्यात् त्वमवश्यमेतान् शिशून् संपोष्य उत्तममनुष्यान् कारयिष्यसीति मम कामना वर्तते। प्रभुः त्वत्त इमामेवाशां पोषयति। यो जन्म दत्तवान्, स जीवितुमधिकारमपि दत्तवान्। भगवान् त्वां दीर्घजीवनं कारयतु ।इति।।**

**तव शुभाकांक्षिणी**

**सुश्रीः मेरी**



## शब्दार्थाः टिप्पण्यश्च

| | | |
|---|---|---|
| **तथाप्यस्मिन्** | – | तथापि + अस्मिन्, तब भी इसमें। |
| **बोधगम्या** | – | बोधेन गम्या, बोध (ज्ञान) के द्वारा गम्य, जानने योग्य। |
| **मनोनिवेशः** | – | मनसः निवेशः, ष. तत्पुरुष समास, दत्तचित्त होना। |
| **प्रत्यागमनम्** | – | प्रति + आङ् + गम् + ल्युट्, वापिस लौटना। |
| **कर्मनैपुण्यम्** | – | कर्मसु नैपुण्यम्, सप्तमी तत्पुरुष, कर्मों में निपुणता |
| **स्वीकृत्य** | – | स्वी + कृ + ल्यप्, स्वीकार करके, |
| **अपमिश्रणम्** | – | मिलावट |
| **अनुमीयते** | – | अनु + मा + लट् प्रथम पुरुष एकवचन, अनुमान किया जाता है। |
| **न्यूनीभूतम्** | – | न्यूनी + भू + क्त, कम हो गया। |

| | | |
|---|---|---|
| **अतिरिच्य** | – | अतिरिक्त |
| **विगलिता** | – | वि + गल् + क्त + टाप्, निकली हुई। |
| **अवनमय्य** | – | अव + नम् + ल्यप्, झुकाकर |
| **दायित्वहस्तान्तरणम्** | – | दूसरे को प्रभार हस्तगत कराना |
| **सज्जीकुरु** | – | सज्ज् + च्वि + कृ + लोट् मध्यम पुरुष एकवचन, तैयार करो। |
| **धनादेशेन** | – | धनाय आदेशः, तेन चतुर्थी तत्पुरुष, मनीआर्डर से। |
| **निर्वापितः** | – | निर् + वापि (णिच्) + क्तः, शान्त |
| **आयव्ययाकलनम्** | – | आय व्यय का विवरण |
| **सौप्रस्थानिकी** | – | विदाई |
| **पितरौ** | – | माता च पिता च (द्वंद्व समास) माता और पिता। |



## अभ्यासः

1. **संस्कृतभाषया उत्तराणि लिखत ।**
   (क) श्रीनायारः कुत्र गमनाय इच्छां न प्रकटितवान्?
   (ख) विभागस्य विपक्षे केषाम् अभियोगो नास्ति?
   (ग) श्रीनायारः स्ववेतनस्य अर्धाधिकं भागं कुत्र प्रेषयति स्म?
   (घ) श्रीनायारस्य नेत्रतीराद् विगलिता अश्रुधारा किम् अकरोत्?
   (ङ) बहुदिनेभ्यः स्थगितानां समस्यानां समाधानं कदा जातम्?
   (च) श्रीनायारस्य पार्श्वे पत्रं कया प्रेषितम्?
   (छ) आश्रमे के लालिताः पालिताश्च भवन्ति?
   (ज) पत्रलेखिका कस्य हस्तयोः अनाथाश्रमं समर्प्य सौप्रस्थानिकीमिच्छति?

2. **सप्रसङ्गं हिन्दीभाषया व्याख्यां कुरुत ।**
   (क) उपभोक्तृणामपि अभियोगो नास्ति विभागस्य विपक्षे
   (ख) सर्वे अश्रुलहृदयैः सौप्रस्थानिकीं ज्ञापितवन्तः
   (ग) त्वया निर्मितोऽयं क्षुद्रोऽनाथाश्रमोऽधुना महाद्रुमेण परिणतः।

3. **अधः समस्तपदानां विग्रहाः दत्ताः, तानाश्रित्य समस्तपदानि रचयत समासनामापि लिखत।**

(क) कालस्य खण्डः तस्मिन् = ..................................

(ख) कर्मसु नैपुण्यम् = ..................................

(ग) द्वि च त्रि च अनयोः समाहारः, तेषाम् = ..................................

(घ) दीर्घः अवकाशः, तम् = ..................................

(ङ) धनाय आदेशः, तेन = ..................................

(च) जीवनस्य प्रदीपः = ..................................

4. **रेखाङ्कितपदानि आधृत्य प्रश्ननिर्माणं कुरुत ।**

(क) श्रीनायारः स्वल्पभाषी आसीत्।

(ख) वर्षत्रयस्य आकलनात् ज्ञायते यत् विभागस्य कार्यनैपुण्यं दशगुणैः वर्धितम्।

(ग) तस्य राज्येन सह कश्चित् सम्पर्कः नास्ति।

(घ) पत्रस्य अर्धाधिकं भागं अश्रुधारा आर्द्रीकरोति स्म।

(ङ) श्रीदासः तत्पत्रमुद्घाटितवान्।

(च) भगवान् त्वां दीर्घजीवनं कारयतु।



5. **विपरीतार्थकपदानि मेलयत ।**

| | | |
|---|---|---|
| (क) आगत्य | | (क) विस्मृतः |
| (ख) इच्छाम् | ______ | (ख) गत्वा |
| (ग) स्वल्पभाषी | | (ग) न्यूनीभूतम् |
| (घ) प्रारभ्य | | (घ) पक्षे |
| (ङ) अधिकीभूतम् | | (ङ) बहुभाषी |
| (च) विपक्षे | | (च) समाप्य |
| (छ) स्मृतः | | (छ) लघुजीवनम् |
| (ज) दीर्घजीवनम् | | (ज) अनिच्छाम् |

6. **अधोलिखितानां विशेष्यपदानां विशेषणपदानि पाठात् चित्वा लिखत ।**

वार्तालापः, वर्षत्रयस्य, अश्रुधारा, समस्यानाम्, व्यवहारः, पत्रम्, शिशवः।

7. **अधोलिखितेषु पदेषु प्रकृतिप्रत्ययविभागं कुरुत ।**

समाप्य, जातम्, त्यक्त्वा, धृत्वा, पठन्, संपोष्य।

# योग्यताविस्तारः

1. प्रस्तुतकथायाः मूललेखकः श्रीचन्द्रशेखरदासवर्मा ओडियासाहित्यक्षेत्रे लब्धप्रतिष्ठः कथाकारो वर्तते। अस्य जन्म 1945 तमे ईशवीयसंवत्सरे अभवत्। अस्य द्वादशकथाग्रन्थाः, एकः नाट्यसङ्ग्रहः त्रयः समीक्षा-ग्रन्थाश्च प्रकाशिताः सन्ति। पाषाणीकन्या वोमा च श्रीवर्मणः प्रसिद्धौ कथासंग्रहौ स्तः। 'दीनबन्धुः श्रीनायारः' इति कथा पाषाणीकन्या इति कथासंग्रहात् संकलिता।
2. भारतस्य प्रदेशाः- भारतवर्षे अष्टाविंशति-प्रदेशाः वर्तन्ते। षट् केन्द्रशासितप्रदेशाः सन्ति।
3. अत्रत्याः जनाः विविधभाषाभाषिणः सन्तिः। हिन्दीम् आङ्ग्लभाषां च अतिरिच्य मलयालम-तमिल-उडिया-बङ्गला-गुजराती-मराठी-कोंकणी-कन्नड-असमिया-पञ्जाबी भाषाः अत्रत्याः जनाः वदन्ति।
4. पत्रलेखनं साहित्ये प्रसिद्धा विधा वर्तते।

   प्रस्तुतपाठे समागतं पत्रम् अवलोक्य स्वकीयान् विचारान् संस्कृतेन लिखत।







12078CH11

## एकादशः पाठः

# उद्भिज्ज-परिषद्

प्रस्तुत पाठ 'उद्भिज्ज–परिषद्' पण्डित हृषीकेश भट्टाचार्य की निबन्ध पुस्तक 'प्रबन्ध मञ्जरी' से संक्षिप्त करके लिया गया है। श्रीभट्टाचार्य का समय 1850–1913 ई. है। संस्कृत के आधुनिक गद्यकारों में इनका अन्यतम स्थान माना जाता है। निबन्ध–लेखन की दृष्टि से तो ये अद्वितीय हैं। ये ओरियन्टल कॉलेज, लाहौर में संस्कृत के प्राध्यापक थे। इन्होंने 'विद्योदय' नामक संस्कृत पत्रिका का 44 वर्षों तक बड़ी योग्यता के साथ सम्पादन किया। इनका 'प्रबन्ध–मञ्जरी' नामक लेख–संग्रह–ग्रन्थ 1930 में प्रकाशित हुआ था। इस ग्रन्थ की भाषा अत्यन्त सरल, सरस तथा प्रवाहपूर्ण है। इनकी भाषा में महाकवि बाण की शैली की छाप स्पष्ट देखी जा सकती है।

उद्भिज्ज शब्द का अर्थ है- वृक्ष और परिषद् का अर्थ है सभा। इस शब्द का अर्थ हुआ 'वृक्षों की सभा।' इस सभा के सभापति हैं अश्वत्थ–पीपल। वे अपने भाषण में मानवों पर बड़े ही व्यंग्यपूर्ण प्रहार करते हैं।





अथ सर्वविधविटपिनाम् मध्यभागे स्थितः सुमहानअ-श्वत्थदेवः वदति-भो! भो! वनस्पतिकुलप्रदीपा महापादपाः कुसुमकोमलदन्तरुचः लता- कुलललना-श्च! सावहिताः शृण्वन्तु भवन्तः। अद्य मानववार्तैवास्माकं समालोच्यविषयः। मानवा नाम सर्वासु सृष्टिधारासु निकृष्टतमा सृष्टिः, जीवसृष्टिप्रवाहेषु मानवा इव पर-प्रतारकाः स्वार्थसाधनपरा मायाविनः कपट-व्यवहारकुशलाः हिंसानिरताः जीवाः न विद्यन्ते। भवन्तो नित्यमेवारण्यचारिणः सिंहव्याघ्रप्रमुखान् हिंस्रत्वभावनया प्रसिद्धान् श्वापदान् अवलोकयन्ति। ततो भवन्त एव कथयन्तु याथातथ्येन किमेते हिंसादिक्रियासु मनुष्येभ्यो भृशं गरिष्ठाः। श्वापदानां हिंसाकर्म किल जठरानलनिर्वाणमात्रप्रयोजकम्। प्रशान्तजठरानले सकृदुपजातायां स्वोदरपूर्तौ नहि ते करतलगतानपि हरिणशशकादीन् उपघ्नन्ति। न वा तथाविध-दुर्बलजीवानां घातार्थम् अटवीतोऽटवीं परिभ्रमन्ति।

मनुष्याणां हिंसावृत्तिस्तु निरवधिः। पशुहत्या तु तेषाम् आक्रीडनम्। केवलं विक्लान्तचित्तविनोदाय महारण्यम् उपगम्य ते यथेच्छं निर्दयं च पशुघातं कुर्वन्ति। तेषां पशुप्रहार-व्यापारमालोक्य जडानामपि अस्माकं विदीर्यते हृदयम्।

निरन्तरम् आत्मोन्नतये चेष्टमानाः लोभाक्रान्त-हृदयाः मनुजन्मानः किल प्रतिक्षणं स्वार्थसाधनाय सर्वात्मना प्रवर्तन्ते। न धर्ममनुधावन्ति, न सत्यमनुबध्नन्ति। परं तृणवद् उपेक्षन्ते स्नेहम्। अहितमिव परित्यजन्ति आर्जवम्। अमङ्गलमिव उपघ्नन्ति विश्वासम्। न स्वल्पमपि बिभ्यति पापाचारेभ्यः, न किञ्चिदपि लज्जन्ते मुहुरनृतव्यवहारात्। नहि क्षणमपि विरमन्ति परपीडनात्।

न केवलमेते पशुभ्यो निकृष्टास्तृणेभ्योऽपि निस्सारा एव। तृणानि खलु वात्यया सह स्वशक्तितः सुचिरमभियुध्य सम्मुखसमरप्रवर्तमाना वीरपुरुषा इव शक्तिक्षये क्षितितले निपतन्ति, न तु कदाचित् कापुरुषा इव स्वस्थानम् अपहाय प्रपलायन्ते। मनुष्याः पुनः स्वचेतसा एव भविष्यत् समये सङ्घटिष्यमाणं कमपि विपत्पातमाकलय्य परिकम्पमानकलेवराः दुःख-दुःखेन समयमतिवाहयन्ति। परिकल्पयन्ति च पर्याकुला बहुविधान् प्रतिकारोपायान् येन मनुष्यजीवने शान्तिसुखं मनोरथपथादतिक्रान्तमेव।

अथ ते तावत्तृणेभ्योऽप्यसाराः पशुभ्योऽपि निकृष्टतरा-श्च। तथा च तृणा-दिसृष्टेरनन्तरं तथाविधजीवनिर्माणं वि-श्वविधातुः कीदृशं नाम बुद्धिमत्ताप्रकर्षं प्रकटयति।

**इत्येव हेतुप्रमाणपुरस्सरं सुचिरं बहुविधं विशदं च व्याख्याय सभापतिर-श्वत्थदेव उद्भिज्ज-परिषद् विसर्जयामास।**

## शब्दार्थाः टिप्पण्यश्च

| | | |
|---|---|---|
| **उद्भिज्जः** | – | (उद्भिज्य जायते इति उद्भिज्जः) वनस्पति |
| **विटपी** | – | (विटप + इन्) वृक्ष |
| **अश्वत्थः** | – | पीपल का पेड़ |
| **कुलललनाः** | – | कुलस्य ललनाः, कुल की स्त्रियाँ |
| **सावहिता** | – | सावधान |
| **सृष्टिधारासु** | – | सृष्टेः धारा, षष्ठी तत्पुरुष समास सृष्टिधारा, तासु, सृष्टि की परम्परा में |
| **निकृष्टतमा** | – | निकृष्ट + तमप्, अत्यधिक नीच |
| **परप्रतारकाः** | – | परस्य प्रतारकः, षष्ठी तत्पुरुष समास, दूसरे को पीड़ित करने वाले |
| **श्वापदान्** | – | जंगली जानवरों को |
| **याथातथ्येन** | – | वस्तुतः |
| **भृशम्** | – | अत्यधिक |
| **जठरानल-निर्वाणम्** | – | जठरानलस्य निर्वाणम् षष्ठी तत्पुरुष समास, पेट की अग्नि, भूख की शान्ति |
| **करतलगतान्** | – | करतलगतान्, हाथ में आये हुए |
| **उपघ्नन्ति** | – | उप + हन् + लट् लकार, प्रथम पुरुष, बहुवचन, मारते हैं |
| **घातार्थम्** | – | मारने के लिए |
| **अटवीतः अटवीम्** | – | अटवी + तस्, एक जंगल से दूसरे जंगल को |
| **निरवधिः** | – | असीम |
| **आक्रीडनम्** | – | आ + कीड् + ल्युट् प्रत्यय, खेल |

| | | |
|---|---|---|
| **विक्लान्तः** | – | वि + क्लम् + क्त प्रत्यय, थका हुआ |
| **उपगम्य** | – | उप + गम् + क्त्वा (ल्यप् प्रत्यय), पास जाकर |
| **सर्वात्मना** | – | पूरे मन से (सभी प्रकार से) |
| **प्रवर्तन्ते** | – | प्र + वृत् + लट् लकार प्रत्यय, प्रथम पुरुष बहुवचन, प्रवृत्त होते हैं। |
| **उपेक्षन्ते** | – | उप + ईक्ष् + लट्, लकार प्रथम पुरुष बहुवचन, उपेक्षा करते हैं। |
| **आर्जवम्** | – | ऋजोर्भावः आर्जवम्, सीधापन |
| **बिभ्यति** | – | भी + लट् लकार प्रथम पुरुष बहुवचन, डरते हैं। |
| **पापाचारेभ्यः** | – | पापश्चासौ आचारः, पापाचारः तेभ्यः, अनुचित आचरण से |
| **विरमन्ति** | – | वि + रम् धातु + लट् लकार + प्रथम पुरुष बहुवचन, रुकते हैं। |
| **वात्यया** | – | आँधी से |
| **अभियुध्य** | – | अभि + युध् + क्त्वा (ल्यप्) प्रत्यय संघर्ष करके |
| **कापुरुषाः** | – | कायर |
| **प्रपलायन्त** | – | प्र + परा + अय् + लङ् लकार, भागते हैं, प्रथम पुरुष, बहुवचन |
| **अग्रतः** | – | अग्र + तस्, आगे |
| **सङ्घटिष्यमाणं** | – | सम् + घट् + शानच् प्रत्यय, घटित होने वाले |
| **परिकम्पमानः** | – | परि + कम्प् + कानच् प्रत्यय, प्रथमा विभक्ति एकवचन, काँपता हुआ |
| **अतिवाहयन्ति** | – | अति + वह् + णिच् + लट् लकार, प्रथमपुरुष बहुवचन बिताते हैं। |
| **पर्याकुलाः** | – | परि + आकुलाः, बेचैन |
| **अतिक्रान्तम्** | – | अति + क्रम् + क्त प्रत्यय, प्रथम पुरुष एकवचन, बाहर जा चुका है। |
| **अप्यसाराः** | – | अपि + असाराः, सारहीन |
| **प्रकर्षम्** | – | अधिकता |
| **पुरस्सरम्** | – | पुरः सरतीति पुरस्सरः तम्, आगे |

# अभ्यासः

**1. संस्कृत भाषया उत्तरत ।**

(क) उद्भिज्जपरिषद् इति पाठस्य लेखकः कः अस्ति?

(ख) उद्भिज्जपरिषदः सभापतिः कः आसीत्?

(ग) अश्वत्थमते मानवाः तृणवत् कम् उपेक्षन्ते?

(घ) सृष्टिधारासु मानवो नाम कीदृशी सृष्टिः?

(ङ) मनुष्याणां हिंसावृत्तिः कीदृशी?

(च) पशुहत्या केषाम् आक्रीडनम्?

(छ) श्वापदानां हिंसाकर्म कीदृशम्?

**2. रिक्तस्थानानि पूरयत ।**

(क) मानवा नाम सर्वासु सृष्टिधारासु ..................... सृष्टिः।

(ख) मनुष्याणां ..................... निरवधिः।

(ग) नहि ते करतलगतानपि ..................... उपघ्नन्ति।

(घ) परं तृणवद् उपेक्षन्ते ..................... ।

(ङ) न केवलमेते पशुभ्यो निकृष्टास्तृणेभ्योऽपि ..................... एव।



**3. अधोलिखितानां पदानां वाक्येषु प्रयोगं कुरुत ।**

मायाविनः, श्वापदान्, निरवधिः, विसर्जयामास, बिभ्यति, पर्याकुलाः, लज्जन्ते, विरमन्ति, कापुरुषाः, प्रकटयति।

**4. सप्रसङ्गं हिन्दीभाषया व्याख्या कार्या ।**

मनुष्याणां हिंसावृत्तिस्तु निरवधिः। पशुहत्या तु तेषाम् आक्रीडनम्। केवलं विक्लान्तचित्तविनोदाय महारण्यम् उपगम्य ते यथेच्छं निर्दयं च पशुघातं कुर्वन्ति। तेषां पशुप्रहार-व्यापारमालोक्य जडानामपि अस्माकं विदीर्यते हृदयम्।

**5. प्रकृति-प्रत्ययविभागः क्रियताम् ।**

निकृष्टतमा, उपगम्य, प्रवर्तमाना, अतिक्रान्तम्, व्याख्याय, कथयन्तु, उपघ्नन्ति, आक्रीडनम्

**6. सन्धिविच्छेदं कुरुत ।**

मानवा इव, भवन्तो नित्यम्, स्वोदरपूर्तिम्, हिंसावृत्तिस्तु, आत्मोन्नतिम्, स्वल्पमपि

**7. अधोलिखितानां समस्तपदानां विग्रहं कुरुत ।**

महापादपाः, सृष्टिधारासु, करतलगतान्, वीरपुरुषाः, शान्तिसुखम्

## योग्यताविस्तारः

**(1) प्रचुरोदकवृक्षो यो निवातो दुर्लभातपः।**
**अनूपो बहुदोषश्च समः साधारणो मतः॥** *चरकसंहिता*

**(2) मानवं पुत्रवद् वृक्षास्तारयन्ति परत्र च।**
**पुत्रवत्परिपाल्यास्ते पुत्रास्ते धर्मतः स्मृताः॥** *महाभारत अनुशासनपर्व*



**(3) एतेषां सर्ववृक्षाणां छेदनं नैव कारयेत्।**
**चातुर्मासे विशेषेण विना यज्ञादिकारणम्॥** *महाभारत अनुशासनपर्व*

**(4) एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना।**
**वासितं वै वनं सर्वं सुपुत्रेण कुलं यथा॥** *महाभारत अनुशासनपर्व*

**(5) ''दशकूपसमा वापी दशपुत्रसमो द्रुमः''।**
**वृक्षविषयिण्यः ईदृश्य अन्या सूक्तयोऽपि गवेषणीयाः॥**





12078CH12

## द्वादशः पाठः

# किन्तोः कुटिलता

यह पाठ देवर्षि श्रीकलानाथ शास्त्री द्वारा सम्पादित पं. श्री भट्ट मथुरानाथ शास्त्री के निबन्धसंग्रह 'प्रबन्ध-पारिजातः' से संकलित किया गया है।

पं. भट्ट मथुरानाथ शास्त्री के पिता पं. भट्ट द्वारकानाथ जयपुर निवासी थे। पं. भट्ट मथुरानाथ का जन्म जयपुर में सन् 1889 ई. में हुआ और निधन भी वहीं 4 जून, 1964 ई. को हुआ। आपकी पूर्वज परम्परा अत्यन्त प्रतिभा सम्पन्न रही। इन्होंने महाराजा संस्कृत कॉलेज से साहित्याचार्य की उपाधि प्राप्त की और वहीं व्याख्याता बन गए। आप जयपुर से प्रकाशित 'संस्कृतरत्नाकर' पत्रिका के सम्पादक रहे। भट्ट मथुरानाथ शास्त्री प्रणीत संस्कृत की रचनाओं में 'जयपुरवैभवम्', 'गोविन्दवैभवम्', 'संस्कृतगाथासप्तशती' और 'साहित्यवैभवम्' विशेष उल्लेखनीय हैं। इनके अतिरिक्त इन्होंने चालीस कथाएँ और सौ से भी अधिक निबन्ध संस्कृत में लिखे। इनकी 'सुरभारती', 'सुजन-दुर्जन-सन्दर्भः' और 'युद्धमुद्धतम्' नामक पद्य रचनाएँ भी उल्लेखनीय हैं।

यहाँ संकलित पाठ में श्री भट्ट जी ने दिखाया है कि जब कभी किसी कथन के साथ 'किन्तु' लग जाता है, तब बहुधा वह पहले कथन के अच्छे भाव को समाप्त कर उसे दोषपूर्ण और सम्बोधित व्यक्ति के लिए दुःख पैदा करने वाला, उसके उत्साह का नाशक और शत्रुरूप बना देता है। ऐसे अवसर विरल होते हैं जहाँ 'किन्तु' सम्बोधित व्यक्ति के लिए सुखदायक सिद्ध होता है।

लेख की भाषा सरल व सुबोध है, अलंकारों और दीर्घ समासों आदि का प्रयोग नहीं किया गया है। भाव सुस्पष्ट और सामान्य जीवन में जनसाधारण द्वारा अनुभूत हैं।

**कुटिलेनामुना 'किन्तु'-ना कियत्कालात् क्लेशितोऽस्मि। यत्र यत्राहं गच्छामि तत्र तत्रैवास्य शत्रुता सम्मुखस्थिता भवति। अस्य 'किन्तोः' कारणात् कस्मिन्नपि कार्ये सफलता दुर्घटास्ति। बहून् वारान् दृष्टवानस्मि यत्कार्यं सर्वथा सज्जं सम्पद्यते, सर्वप्रकारैः सिद्धिर्हस्तगता भवति, यथैव सफलताया मूर्तिः सम्मुखमागच्छन्ती विलोक्यते तथैव क्रूरोऽयं किन्तुर्मध्ये प्रविश्य सर्वं विनाशयति।**

राज्यतो लब्धाया भूमेरभियोगो बहोः कालान्न्यायालये चलति स्म। अस्मिन्नभियोगे प्राड्विवाकमहोदयो निर्णयं श्रावयन् अवोचत् ···'वयं पश्यामो यदभियोक्तुः पक्षादावश्यकानि सर्वाण्येव प्रमाणान्युपस्थितानि सन्ति। राज्यतो लब्धाया भूमेर्दानपत्रमप्युपस्थापितमस्ति। न्यायालयेन परिज्ञातं यत् इयं भूमिरभियोक्तुरधिकारभुक्ताऽस्ति·········।'

अहं निश्चिन्ततताया एकं शान्तं निः-श्वासममुचम्। मया सर्वथा स्थिरीकृतं यद्भाग्यलक्ष्मीरनुपदमेव मे कन्धरायां विजयमाल्यं प्रददातीति। परं प्राड्विवाकमहोदयः पुनरग्रे प्रावोचत् ··· '········· किन्तु राजस्व-विभागस्य प्रधानः किलैकोऽधिकारी एतद्विरोधे एकं पत्रं प्रेषितवानस्ति। एतदुपर्यपि लक्ष्यदानमावश्यकं मन्यामहे।' मम सर्वोऽप्युत्साहः पलायाञ्चक्रे। 'किन्तु'-कुन्तो ममान्तःकरणं समन्तात् कृन्तति स्म। निजहृदयमवष्टभ्य न्यायं प्रशंसन् गृहमागमम्।

दृष्टं मया यदेष 'किन्तुः' दयाधर्मादिष्वपि अनधिकारचेष्टातो न विरतो भवति। प्रातः कालस्यैव कथास्ति··· धर्मव्यवस्थापकमहोदयस्य समीपे एको दीनः करुणक्रन्दनपुरःसरं न्यवेदयत्··· 'महाराज! नववार्षिकी मे कन्या। जातस्य तस्या विवाहस्य अद्य तृतीयो दिवसः। नाद्यापि चतुर्थीकर्म सम्पन्नं येन विवाहः पूर्णः परिगण्येत। तस्याः पतिः सहसाऽम्रियत। हा हन्त! तस्या अबोधबालिकाया अग्रे किं भावि? अस्तकर्मसङ्ख्यावृद्धौ किं ममोच्चकुलमपि सहायकं भविष्यति? आज्ञापयन्तु श्रीमन्तः किं मया साम्प्रतं कर्त्तव्यम्।'

पण्डितमहोदयो गभीरतममुद्रयाऽवोचत्...'अवश्यमिदं दयास्थानम्। वर्तमानकाले समाजस्य भीषणपरिस्थितेः पर्यालोचन इदमेवोचितं प्रतीयते यत् एवंविधस्थले पुनर्विवाहस्य व्यवस्था दीयेत... 'किन्तु' वयं मुखेन कथमेतत् कथयितुं शक्नुमः। प्राचीनमर्यादापि तु रक्षितव्या स्यात्।'

कुत्रचित् सोऽयं 'किन्तुः' नितान्तमनुतापं जनयति। अनेकवर्षाणां परिश्रमस्य फलस्वरूपं मन्निर्मितमेकं नवीनसंस्कृतपुस्तकमादाय साहित्यमर्मज्ञस्य एकस्य देशनेतुः समीपेऽगच्छम्। 'नेतृ'- महोदयः पुस्तकस्य गुणान् सम्यक् परीक्ष्य प्रसन्नः सन्नवोचत्.
.. 'पुस्तकं वास्तव एव अद्भुतं निर्मितमस्ति। बहुकालानन्तरं संस्कृते एवंविधा नवीनता

दृष्टिगताऽभवत्। ⋯ 'किन्तु' मत्सम्मत्यां तदिदं पुस्तकं भवान् संस्कृते न विलिख्य यदि हिन्दीभाषायामलिखिष्यत् तर्हि सम्यगभविष्यत्।'

गृहं प्रति निवर्तमानोऽहं 'किन्तु' कृताया अस्या मर्मवेधकशिक्षाया उपरि समस्तेऽपि गृहमार्गे कर्णं मर्दयन्नगच्छम्। अनेन 'किन्तु'-ना मह्यं सा शिक्षा दत्तास्ति यद्यहं सत्पुरुषः स्यां तर्हि पुनरस्मिन् मार्गे पदनिक्षेपस्य नामापि न गृह्णीयाम्।

कदाचित् कदाचित्त्वयं क्रूरः 'किन्तुः' मुखस्य कवलमप्याच्छिनत्ति। स्वल्प-दिनानामेव वार्तास्ति। आयुर्वेदमार्तण्डस्य श्रीमतः स्वामिमहाभागस्य औषधिं निषेव्य अधुनैवाहं नीरोगोऽभवम्। अस्मिन्नेव समये मित्रगोष्ठ्या निमन्त्रणं प्राप्नवम्। भोजनगोष्ठ्यां समवेतुं ममापीच्छाशक्तौ प्राबल्यस्य प्रवाहः पूर्णमात्रायां प्रवर्द्धमान आसीत्। अहं स्वामिमहोदयमप्राक्षम्...'किमहं तत्र गन्तुं शक्नोमि।' उत्तरमलभ्यत... 'तादृशी हानिस्तु नास्ति। 'किन्तु' गरिष्ठवस्तुनो भोजने अवधानमत्यावश्यकम् अधुनापि दौर्बल्यमस्ति।'

उत्साहस्य ज्वाला या पूर्वं प्रचण्डतमा आसीत् अर्द्धमात्रायां तु तत्रैव निर्वाणाभवत्। अस्तु येन केनापि प्रकारेण भोजनगोष्ठ्याविशेषाधिवेशनेऽस्मिन् सम्मिलितस्त्वभवमेव। भोजनपीठे अधिकारं कुर्वन्नेवाहमपश्यं यत् सर्वाङ्गपूर्णा एका भोज्यव्य-ञ्जनानां प्रदर्शनी सम्मुखे वर्तत इति। धीरगम्भीरक्रमेणाहं भोजनकाण्डस्यारम्भमकरवम्। अहं मोदकस्यैकं ग्रासमगृह्णम्। तस्य स्वादसूत्रेण सन्दानितोऽहं यथैव द्वितीयं ग्रासमगृह्णं तथैव 'स्वामिमहोदयस्य 'किन्तु' मम कण्ठनलिकामरुधत्। मुखस्य ग्रासो मुख एवाऽभ्राम्यत् अग्रे गन्तुं नाशक्नोत्। 'किन्तोः' भीषण-विभीषिका प्रत्येकवस्तुनि गरिष्ठतां सम्पाद्य भोजनं तत्रैव समाप्तमकरोत्।'

अहं देशसेवां कर्तुं गृहाद् बहिरभवम्। मया निश्चितमासीत् 'एतावन्ति दिनानि स्वोदरसेवायै क्लिष्टोऽभवम्। इदानीं कियन्तं कालं देशसेवायामपि लक्ष्यं ददामि।' यथैवाहं मार्गेऽग्रेसरो भवामि, तथैव मम बाल्याध्यापकमहोदयः सम्मुखोऽभवत्। मास्टरमहोदयेन प्रस्थानहेतौ पृष्टे सति सम्पूर्णसमाचारनिवेदनं ममाऽऽवश्यकमभूत्। अध्यापकमहोदयः प्रावोचत्...'तात, सर्वमिदं सम्यक्। किन्तु स्वगृहाभिमुखमपि किञ्चिद्विलोकनीयं भवेत्। येषां भरणपोषणं भवत्येवायत्तं तान् किं भवान् निराधारमेव निर्मुच्य स्वैरं गन्तुमर्हेत्।'

पुनः किमासीत्। अत्रैव परोपकारविचाराणाम् इतिश्रीरभूत्। 'किन्तु'- महोदयेन देशसेवायाः सर्वापि विचारपरम्परा परपारे परावर्त्यत। गृहाभिमुखं मुखं कुर्वन् तस्मात् स्थानादेव परावर्तिषि।

मयानुभूतमस्ति यदयं कुटिलः 'किन्तुः' नानादेशेषु नानारूपाणि सन्धार्य गुप्तं विचरति। यथैव लोकानां कार्यसिद्धेरवसरः समुपतिष्ठते तथैवायं प्रकटीभूय लोकानां कार्याणि यथावस्थितमवरुणद्धि। अहमेतस्य 'किन्तु'-कुठारस्य कठोरतया नितान्तमेव तान्तोऽस्मि। अहं वाञ्छामि यदेतस्याक्रमणात् सुरक्षितो भवेयम्। परं नायं मां त्यक्तुमिच्छति। बहवो मार्मिका मामबोधयन् यत् 'त्वम् एतं सम्मुखमायान्तं दृष्ट्वैव कथं वित्रस्यसि, कुत श्च एनमपसारयितुं प्रयतसे? किमेनं सर्वथा अहितकारिणमेव निर्ि श्चतवानसि? नेदं सम्यक्। पशुघातकस्य छुरिकापि पाशपतितस्य गलबन्धनं छित्त्वा समये प्राणरक्षां कुर्वती दृष्टा।' अहमपि सत्यस्यैकान्ततोऽपलापं न करिष्यामि। एतस्य कथनस्य सत्यताया मयापि परिचयः कदाचित् कदाचित् प्राप्तोऽस्ति।

'शब्दैः प्रतीयते यद् गृहे चौरः प्रविष्टोऽस्ति' इति सभयमनुलपन्ती गृहिणी रात्रौ मामबोधयत्। अहं निजशौर्यं प्रकाशयन् महता वीरदर्पेण लगुडमात्रमादाय अन्धकार एव चौरनिग्रहाय प्रचलितोऽभवम्। गृहिणी कर्णसमीप आगत्य शनैरवदत्... "अन्धकारेऽस्मिन् यासि त्वमवश्यम्, 'किन्तु' दृश्यतां स शस्त्रं न प्रहरेत्।"

पुनः किमासीत्। मम वीरदर्पस्य शौर्यस्य च प्रज्ज्वलितं ज्योतिस्तत्रैव निर्वाणमभूत्। चौरनिग्रहः कीदृशः, निजप्राणपरित्राणमेव मे अन्वेषणीयमभवत्। लगुडं प्रक्षिप्य कोष्ठके निलीनोऽभवम्। तत एव च कम्पित-कण्ठेन चीत्कारमकरवम्--'लोकाः! आगच्छत, चौरः प्रविष्टोऽस्ति।'

एकेन अमुना 'किन्तु' - ना चौरस्य चपेटाभ्योऽवमुच्य सौख्यस्य सुरक्षिते प्रकोष्ठकेऽहं प्रवेशितः। अनेन किन्तुना कस्मिन्नपि सङ्कटसमये कदाचित् किञ्चित्कार्यं कामं कृतं स्यात् परं भूयसा तु अस्माद् भयमेव भवति। अस्य हि सार्वदिकः स्वभाव एव यत् वार्ता काममुत्तमास्तु अधमा वा परमयं मध्ये प्रविष्य तस्याः कथाया विच्छेदमवश्यं करिष्यति। अतएव कस्मिन्नपि समये कार्यसाधकत्वेऽपि लोका अस्माद् वित्रस्यन्त्येव। वैरिणां भारावताराय कदाचित् हिताधराऽपि करवालधारा क्रूराकारा

**प्रखरप्रकारा एव प्रसिद्धा लोकेषु। विगुणः कार्षापणः, कुत्सित-श्च पुत्रः सङ्कटे कदाचिदुपयुक्तो भवेत् परन्तु जनसमाजे द्वयोरुपर्येव नासा- भ्रूसङ्कोचो जातो जनिष्यते च। इदमेव कारणं यत् यस्यां वार्तायां 'किन्तुः' उत्पद्यते तां वार्तां लोका विगुणां गणयन्ति।**

## शब्दार्थाः टिप्पण्यश्च

| | | |
|---|---|---|
| **अभियोगः** | – | मुकदमा, अभि + युज् + घञ्, पुल्लिङ्ग, प्रथम पुरुष एकवचन |
| **अभियोक्तुः** | – | मुद्दई का, मुकदमा चलाने वाले का, अभि + युज् + तृ। ऋकारान्त पुल्लिङ्ग, पञ्चमी एकवचन। |
| **दुर्घटा** | – | असम्भव, दुःखेन घटायितुं शक्या, दुर् + घट् + आ |
| **कुन्तः** | – | भाला |
| **मुद्रा** | – | मुखाकृति |
| **प्राबल्यस्य** | – | प्रबलता का, वेगपूर्वक, प्र + बल + ष्यञ्, नपुंसक लिङ्ग, षष्ठी एकवचन |
| **निर्वाणा** | – | समाप्त हो चुकी, निर् + वा + क्त, स्त्रीलिङ्ग, प्रथमपुरुष, एकवचन |
| **इतिश्रीः** | – | समाप्ति |
| **मार्मिकः** | – | तत्त्वज्ञ, विषयज्ञ, मर्म + ठक्, प्रथमपुरुष एकवचन |
| **प्राड्विवाकः** | – | जज, न्यायाधीश |
| **लक्ष्यदानम्** | – | दृष्टिपात, ध्यानदेना, लक्ष्यस्य दानम्, षष्ठी तत्पुरुष |
| **चतुर्थीकर्म** | – | विवाहोपरान्त चौथे दिन किया जाने वाला कर्म, चतुर्थे अहनि क्रियमाणं कर्म, मध्यमपद, लोपी समास |
| **कवलम्** | – | ग्रास |
| **अवधानम्** | – | सावधानी, परहेज, अव + धा + ल्युट् प्रत्यय |
| **विभीषिका** | – | भय, डर, वि + भी + षिच् + ण्वुल् + टाप्, प्रत्यय षुकागम और इत्व |
| **तान्तः** | – | पीड़ित, परेशान |
| **परिगण्येत** | – | गिना जाए, परि + गण् (संख्याने) + विधिलिङ् |

| | | |
|---|---|---|
| **कन्धरायाम्** | – | गले में, गर्दन पर (में) |
| **साम्प्रतम्** | – | अभी, वर्तमान में, सम्प्रति एव साम्प्रतम् |
| **गभीरतमम्** | – | गम्भीरतम, गभीर + तमप् |
| **पर्यालोचने** | – | देखने पर, समग्र दृष्टिपात करने पर, परि + आ + लोच् + ल्युट्, सप्तमी विभक्ति, एकवचन (दर्शन, अंकन) |
| **न्यवेदयत्** | – | निवेदन किया, नि + अवेदयत्, विद् (ज्ञाने) धातु लङ्, लकार णिजन्त, प्रथमपुरुष, एकवचन |
| **पदनिक्षेप** | – | कदमरखना, पदयोः निक्षेपः, षष्ठी तत्पुरुष |
| **अनुतापम्** | – | पश्चात्ताप, पछतावा, अनु + तापम् |
| **विलोक्यते** | – | देखा जाता है, वि + लोक् (दर्शन, अंकन) + यक्, लट् लकार आत्मनेपद, प्रथमपुरुष, एकवचन भावे प्रयोगः |
| **अवष्टभ्य** | – | रोककर, अव + स्तम्भ् (अवरोध) + ल्यप् प्रत्यय |
| **परित्राणम्** | – | रक्षण, बचाव, परि + त्रैङ् (पालने) + ल्युट्, नपुंसकलिङ्ग प्रथमपुरुष एकवचन |
| **अन्वेषणीयम्** | – | ढूँढने योग्य, खोजने योग्य, अनु + इष् + अनीयर् प्रत्यय |
| **लगुडम्** | – | लाठी, दण्ड |
| **निलीनः** | – | छुपा हुआ, नि + ली + क्त प्रत्यय |
| **चपेटाभ्यः** | – | ताडन से, थप्पड़ों से |
| **कुत्सितः** | – | निन्दित, गर्हित |



## अभ्यासः

**1. संस्कृतेन उत्तरं दीयताम् ।**

(क) भूमिविषयके अभियोगे 'किन्तु'-ना का बाधा उपस्थापिता?

(ख) वाक्यमध्ये प्रविश्य सर्वं कार्यं केन विनाश्यते?

(ग) लेखकस्य देशसेवायाः विचारस्य कथम् इतिश्रीरभूत्?

(घ) नेतृमहोदयः पुस्तकप्रशंसां कुर्वन् 'किन्तु' प्रयोगेन कं परामर्शम् अददात्?

(ङ) भोजन-गोष्ठीस्थले कीदृशी प्रदर्शनी समायोजिता आसीत्?

(च) भोजनगोष्ठ्यां लेखकस्य कण्ठनलिकां कः अरुधत्?

